श्रीरघुवीराचार्यविरचितम्

# श्रीहरिरहस्ययाचनस्तोत्रम्

संस्कृत, हिन्दी, गुजराती

वृत्तालय-मंदिरम्

संवत १८८६

## आप जिन नई पुस्तकोंकी प्रतीक्षा में थे वे पुस्तकें काशी में छप गई हैं।

### "ऋते ज्ञानान्न मुक्तः"

ज्ञान के विना मुक्ति नहीं होती। अतः अपने ज्ञानकी अभिवृद्धि के लिये निम्नलिखित पुस्तकें अवश्य पढ़े क्योंकि यह चमत्कारी दिव्यब्रह्मज्ञान मानवजीवन को स्वर्गीय बनाकर इच्छित सुख देनेवाला है।

| | | |
|---|---|---|
| १ श्रीहरिवाक्यसुधासिन्धुः | मूल्य रू० | १५. ०० |
| २ श्रीहरिसम्भवमहाकाव्यम् | ,, ,, | १०. ०० |
| ३ श्रीज्ञानविलासः | ,, ,, | ७. ०० |
| ४ श्रीहरिरहस्ययाचनस्तोत्रम् | ,, ,, | ४. ०० |
| ५ श्रीप्रश्नोत्तरसागरः | ,, ,, | ४. ०० |
| ६ श्रीगीर्वाणबोधः | ,, ,, | २. ०० |
| ७ श्रीप्रश्नोत्तर सागर गुजराती | ,, ,, | ००. ६० |
| ८ श्रीसत्संग प्रार्थना | ,, ,, | ००. ४० |

### प्राप्तिस्थान

१ हरिप्रकाश शास्त्री,
श्रीस्वामिनारायण मंदिर मछोदरी,वाराणसी

२ श्री जीवा भगत, स्वा-मंदिर, वडताल

३ शास्त्री नरनारायणदास, स्वा-मंदिर, अमदावाद

४ शास्त्री धर्मवल्लभदासजी, स्वा-मंदिर, जुनागढ

५ स्वामी हरिवल्लभदास, स्वा-मंदिर, गढडा

नोट :—मुख्य पृष्ठपर वृत्तालय मंदिर का चित्र पं. भ. श्रीकांनजी भक्त, वडताल के सौजन्य से प्राप्त

श्रीस्वामिनारायणो विजयतेतराम्

श्रीयोगानन्दमुनिग्रन्थमालायाः चतुर्थं पुष्पम्

सनातनधर्मधुरंधरश्रीरघुवीराचार्यविरचितं

श्रीहरिवाक्यसुधासिन्धुसारभूतं

# श्रीहरिरहस्ययाचनस्तोत्रम्

सनातनधर्मधुरंधरश्रीविहारिलालाचार्यविरचितया

सिद्धान्तोद्घाटिनी-समाख्यया सहितम्

प्रस्तावनाप्रतन्वानः, गुजराती-अनुवादकश्च

शास्त्री श्वेतवैकुण्ठदासः

प्राचीनन्यायाचार्यः, वेदान्ततीर्थः, सांख्ययोगवारिधिः,

संपादकः, प्रकाशकः, हिन्दी-अनुवादकश्च हरिप्रकाशशास्त्री,

वेदशास्त्री, वेदान्ततीर्थः, सांख्य-योग-पुराण-इतिहास-शास्त्राचार्यः.

२०२५ वसन्तपञ्चमी १९६९

# समर्पणम्

अविभाजित दिव्य सत्संगको समर्पित

हरिप्रकाश शास्त्री

# संपादकीय

अमूल्य इस ग्रन्थरत्नकी प्राप्ति और प्रकाशनसे मुझे अपार आनन्दका अनुभव हो रहा है। एवं अपने पूर्वाचार्योंके प्रति श्रद्धासे हृदय भर जाता है। तथा इसके प्रकाशन कार्यमें सहयोग एवं आशिर्वाद देनेवाले मेरे गुरु सद्गुरु पुराणी स्वामी श्रीहरिप्रियदासजी तथा शास्त्री पुराणी मुरलीधरदासजी एवं अमदावाद देशके पण्डितप्रवर संतस्वरूप शास्त्री स्वामी श्रीगोपाल-चरणदासजी आदि गुरुजनोंका मैं आभारी एवं ऋणी हूँ। तथा मुद्रण, संशोधन, प्रकाशनमें अत्यधिक सहयोग देनेवाले मेरे परम स्नेही मित्र श्रीप्राणलाल भाईशंकर आचार्य, वेदान्ताचार्य, एम० ए०, तथा शास्त्री श्रीनारायणप्रसादजी, साहित्यवेदान्ताचार्यके अत्यधिक सहयोगके लिये मैं उन सबका आभारी हूँ। और इसी प्रकार आगे भी उन सबसे प्रेरणा एवं मार्गदर्शन मिलता रहेगा यही मेरी मंगलमय श्रीजीप्रभुसे प्रार्थना है।

वसन्तपञ्चमी संवत् २०२५

हरिप्रकाश शास्त्री

# प्रस्तावना

आमनुष्यादक्षरादिपर्यन्तं सर्वजनसंशोधितचरणकमलयुगलः दिव्यमूर्त्ति-मत्सांगवेदादिभिस्स्तूयमानदिव्यचरित्रः निष्कारणकेवलापरकारुण्यादेवासंख्यजनात्यंतिक-कल्याणाय भागवद्धर्मसंस्थापनाय चाक्षरब्रह्ममुक्तादिभिः सहैव सर्वावतारैकहेतुः स्वय-मक्षराधिपतिः श्रीस्वामिनारायणस्तेन स्वावतरणेन भारतभूमिः समलंकृता—

यस्य स्मरणमात्रेणैव जन्मरणाख्यसंसाराद्विमुच्यते, तस्य दर्शन-स्पर्श-सेवा-समागमेन संसाराद्विमुक्तिस्स्यात्तत्र किमु वक्तव्यम् ।

स्वयं सर्वज्ञत्वात् पूर्णकामत्वाच्च भ्रम-प्रमाद-विप्रलिप्सादिदोषरहित्वाच्चानेकशास्त्र-प्रतिपादिततात्त्विकसदुपदेशद्वारा नैकमुमुक्षुस्वाश्रितजनानां मुक्तिद्वारं निरावरणीकृतम्, परं ब्रह्मणा स्वाश्रितसमज्यायां मुमुक्षुजनहिताय स्वमुखचन्द्रात् स्नावितानि स्ववचोऽमृतानि, श्रीस्वामिनारायणभगवतः परमकृपाभाग्भिः श्रीमुक्तानन्दमुनि-श्रीगोपालानंदमुनि-श्रीनित्या-नन्दमुनि-श्रीब्रह्मानन्दमुनि-श्रीशुकानन्दमुनिभिः संगृहितानि तेषां काव्यरूपेण श्रीशतानंद-महर्षिणा संग्रथितः "श्रीहरिवाक्यसुधासिन्धुः" इति नाम्ना प्रसिद्धो ग्रन्थः ।

तस्य 'सेतुमालाख्यटीका स. ध. धु. श्रीरघुवीराचार्येण कृता, तट्टीकायां प्रत्येकतरंगे तरंगगतवार्तासाररूपश्लोकेन श्रीहरेः प्रार्थना तेनैव कृता, टीकागतश्लोकान् पृथक् समुद्धृत्य श्रीहरिरहस्ययाचनस्तोत्रं रचितम् , तस्य श्रीरघुवीरात्मजश्रीविहारीलाला-चार्येण सिद्धान्तोद्घाटिनो व्याख्या कृतेति सुज्ञैर्वेदितव्यम्—

श्रीहरिः मनुष्यलोके स्वस्य स्वकीयानां च सम्बन्धात् समग्रजीवानामात्यन्तिक-कल्याणं कर्तुं दिव्यवाक्यामृतैः भागवद्धर्मप्रवर्तकः श्रीस्वामिनारायणः मम हृदयारविन्दे सदैव निवसतु, आत्यन्तिकमोक्षाय यावन्ति साधनानि सन्ति तेषु कठिनतरसाधनं किमिति प्रश्नस्य प्रत्युत्तरे सर्वसाधनेभ्यो भगवन्मूर्त्तौ मनसः तैलधारावच्छिन्ननिरंतरस्मृतिसन्तान-स्वरूपवृत्तेरवस्थितिकरणं तदेव कठिनतमं साधनमस्ति । स्वस्यैकान्तिक्या भक्तेरंगभूतं वैराग्यं मह्यं दद्यात् । मम सदा ध्येयोऽस्तु । प्रत्यक्षभगवत्स्वरूपे निश्चयो देयात् । श्रीहरौ ममैकान्तिकी भक्तिरस्तु ।

मायिकविषयसम्बन्धिनीं वासनां नाशयतु । अखिलब्रह्माण्डोत्पत्तिस्थितिप्रलयकर्त्ता श्रीपुरुषोत्तमश्रीस्वामिनारायणः असद्विषयेभ्यः पातु । अक्षरात्परे स्वरूपे दृढा स्थितिरस्तु । स्वभक्तानामन्तरे स्वध्यानस्य सिद्धेरसिद्धेश्च करणता सिद्धान्तत्वेन कथिता । तस्मिन् श्रीहरौ मे भक्तिरूपा शेमुषी भवतु । एकान्तिकभक्तानां स्वधर्म-ज्ञान-वैराग्य-माहात्म्यज्ञान-युक्तभक्त्याख्याः चत्वारो गुणाः, तान् श्रीहरिर्मह्यं ददातु ।

इत्यादिना पूर्वोक्तप्रकारेण श्रीरघुवीराचार्येण श्रीहरेः प्रश्नोत्तरात्मकं यद्यद् रहस्यं तत्तत् सर्वं स्तुतिरूपेण याचितमस्ति । तस्मादस्य ग्रन्थनाम श्रीहरिरहस्ययाचनस्तोत्रं सार्थकत्तरं विद्यते । अस्याध्ययनेन प्रत्यक्षश्रीस्वामिनारायणभगवत्स्वरूपे दृढतरनिश्चयो भवति । स्वधर्म-ज्ञान-वैराग्य-माहात्म्यज्ञानयुग्भक्तिमतां सतां दर्शन-स्पर्श-वन्दन-पूजन-वाक्या-वधारणादिलक्षणेन समागमेनैव मोक्षद्वारमपावृतं स्यात् । अथ च श्रवण-कीर्त्तनादिनवधा-

स्वरूपभागवद्धर्मस्य पोषणमपि धर्मादिगुणगणमण्डितानां सतां प्रसंगादेव भवति । नित्यं सन्तोऽभिगन्तव्याः सतां प्रसंगान्मम वीर्यसंविदो भवन्ति हृत्कर्णरसायनाः कथाः तज्जोषणादाश्वपवर्गवर्त्मनि श्रद्धारतिर्भक्तिरनुक्रमिष्यति, न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ते पुनन्त्युरुकालेन दर्शनादेव साधवः । कार्यः संङ्गोऽन्वहं सतां सन्तो ब्रह्मविदः शान्ता नौ दृढेवाप्सु मज्जतां इत्यादि शास्त्रप्रतिपादितं सन्माहात्म्यं विद्यते अस्मिन्स्तोत्रे प्रायशः नैकतरंगेषु भगवतः भगवद्भक्तानां साधूनां माहात्म्यं श्रीहरिणैव स्वमुखेनोच्चारितम् । श्रीहरिः तदैकांन्तिकभक्तानां च समागमः हे हरे मम देवः इति श्रीरघुवीराचार्येण याचितः ।

दुर्गपत्तन-सारंगपुर-कार्यायन-लोहग्राम-पञ्चालग्राम-वृत्तालय-श्रीनगरादिषु नैकपुर-ग्रामविशेषेषु तात्त्विकोपदेशश्च स्वरूपाणि आत्यन्तिकस्वभक्तसमुदायमुक्त्यत्यर्थं प्रकृतिजन्यसमग्र-तत्त्वानां लक्षणानि हेयोपादेयतया कथितानि आध्यात्मिकोपदेशं निमित्तीकृत्योच्चारितानि स्ववाक्यामृतानि सर्वतो मुमुक्षुजनैः ग्राह्याणि सन्ति, अन्ततो गत्वा धर्मधुरंधरआचार्य्यवर्य्येण ।

हेतुः सर्वावताराणामवतारी स्वयं प्रभुः । पिता श्रीसहजानंदः सर्वोपरि विराजते ॥

'यं साम्येन वदन्ति येऽक्षपरं सर्वावतारैर्जनाः ।
मन्दास्ते त्ववतारिणोऽस्य न परं जानंति तत्त्वं प्रभोः ॥
यस्याज्ञां निवहन्ति मंगलकरां सर्वेऽक्षराद्याः सदा ।
वन्दे तं पुरुषोत्तमं च सहजानन्दं सदानन्ददम्' ॥

इत्यनेन श्रीस्वामिनारायणमहाप्रभोः रहस्यरूपं सर्वावतारित्वं सर्वोत्कृष्टस्वरूपं प्रतिपादितम् । फलश्रुतिरपीदं पठिष्यति स्तोत्रं यो वा श्रोष्यति चादरात् । पुरश्चरिष्यति तेभ्यस्तु प्रसन्नो भविता हरिः ॥

तस्मिन् श्रीहरौ प्रसन्ने सति देहिनां दुर्लभं किमपि नास्ति तेषां सर्वमनोरथास्तूर्णं सफलाः भविष्यन्ति तस्मिन् न संशयामित्यनेन कथितम् , आशीर्वचनमपि महानन्ददातुः श्रीस्वामिनारायणात् मे याचितं रहस्यसेविनां भक्तजनानां मंगलं भवतु इति कथितम् । मनुष्यादारभ्याक्षरपर्यन्तानां स्वस्य च लक्षणकथनपूर्वकसमग्रतात्त्विकरहस्य समुपदिष्टं तदेव मुमुक्षूणां स्वाश्रितानां हिततमो विषय उक्तः ।

श्रीहरिरहस्ययाचनस्तोत्रेण, प्राप्यस्वरूपश्रीहरिः तत्प्राप्तिसाधनानि च, पुनः पुनः स्तूयन्त अत एव स्तुत्यस्य परब्रह्मणः स्तोतॄणां मुमुक्षूणां च सेव्यसेवकभावभजनीयभक्तभाव-प्राप्यप्रापकभाव-गुरुशिष्यभावानां सम्बन्धः । तात्त्विकविज्ञानेनात्यन्तिकी मुक्तिरेव प्रयोजनम् । अधिकारिणस्तु स्वाश्रितमुमुक्षव एव तस्मादिदं स्तोत्रमवश्यमेव मुमुक्षुभिः पठितव्य-मिति शम्—

भवदीयो निवेदकः
शास्त्रिश्वेतवैकुण्ठदासः
प्राचीनन्यायाचार्य-वेदान्ततीर्थ-सांख्ययोग-वारिधिः वृत्तालयनिवासी ।

# श्रीरघुवीराचार्यचरितम् ।

भगवत्सहजानन्दसूक्तिसारप्रकाशकम् । रहस्यं वै ते सुगम्भीरं प्रथयत् यत्कृताविदम् ॥ १ ॥
तस्य श्रीरघुवीराख्यदेशिकेन्द्रस्य पावनम् । सङ्गृह्य सारतो वृत्तं रहस्यादौ निबद्धयते ॥ २ ॥

यस्त्वयमाचार्यपदे भगवता सहजानन्देन सनातनधर्मपथसंरक्षणाय समुद्धरणाय च समुत्तित्तीर्षतां दुरन्तसंसृतिगर्ततः प्रवर्तनाय चौद्धवसम्प्रदायस्य संस्थापितो रघुवीरनामा तस्यैव भ्रातृव्यः । तस्य जन्मस्थानमामलीयाख्यो ग्रामः, भगवता श्रीसहजानन्देन स्वावतरणेन पवित्रितो योऽयमुत्तरकोसलाख्यो देशस्तदन्तर्गतः । जन्मसमयश्चास्य ( संवत् १८६८ फाल्गुनकृष्ण-चतुर्थी ) अयं च शैशव एव परहितैकप्रवृत्तिरनभिभूतो दुर्गुणैरभिसेव्यमानश्च सुगुणैः सत्यैकप्रियः प्रियः पित्रोरिव लोकानामपि बभूव । यथाकालं यथाविधानमुपनीतोऽयं कालेनाल्पेन वेदे वेदाङ्गे च निष्णातो बभूव । विद्ययेव विनयेन च परिपूर्णः, यौवनश्रियेव विवेकश्रियापि समाश्लिष्टः-विद्याधनाभिजनसमुत्कर्षेणेव सरलस्वभावेनाप्युपलक्षितः, आभाषणेन च मृदुमधुरेण धर्म्येणाकर्षकः शुश्रूषुजनचेतसां बभूव । यदा भगवान्सहजानन्दः स्वेन धार्यमाणां धर्मरक्षणैकशेषभूतां परहितैकाधायकां देशिकादेशानुवर्तनलक्षणामप्याचार्यधुरं चिरमूढां बाह्यव्यापृतिगर्भतयाऽन्तरारामतालक्षणापरिमितात्मानन्दैकानुभवोपरोधिकां समुचिते पुरुषे समवरोप्य क्वाप्यानन्दमये स्वात्मैकसंवेद्ये दहराकाशे निलयनमाकाङ्क्षमाणो व्यचिन्तयत्; तदाऽस्य हृदयपदवीं द्वावेवाविशतां गुणोपनीतौ भ्रात्रोः पुत्रौ । ययोरन्यतमोऽयं रघुवीराचार्यः, अपरश्चायोध्याप्रसादाख्यः । द्वयोरेनयोरात्मनैकेन चिरादूह्यमानं श्रीमदौद्धवसम्प्रदायनिर्वहरणभारं विभज्य स्थापयन् पुत्रभावेन तौ स्वीकृत्याचार्यपदेऽभिषिच्य विभज्य दक्षिणोत्तरविभागेनाचार्यपदं श्रीरघुवीराचार्याय लक्ष्मीनारायणाधिष्ठिते दक्षिणविभागे श्रीमदौद्धवसम्प्रदायप्रवर्तनैकशेषभूतं तदाचार्यपदं प्रायच्छत् ।

अयं च रघुवीराचार्यः ( संवत् १८८२—कार्तिकशुक्लैकादश्यां ) सम्प्रापिताचार्यपदस्तिरोहिते भगवति सहजानन्दे स्वयमादेशं भगवतः पुनः पुनरनुस्मरन् सदुपदेशमुखेन परमहंसानां च परिषन्मुखेन परितः प्रवर्तयन्नौद्धवसम्प्रदायमनुदिनमनुवर्धमानयाऽऽचार्यसम्पत्त्या बभूव सर्वेषामेव हरिभक्तानां स्पृहणीयचरणकमलः । ये च भगवतः सहजानन्दस्य चरणकमलसमाश्रयाः परमहंसाः सर्व एव ते भगवत आदेशमनुस्मरन्तस्तस्यास्य श्रीरघुवीराचार्यस्यादेशमनुवर्तमाना यथापूर्वं परितो मुमुक्षुजनमण्डलमुपदेशैः समुद्बोधयन्तो लोकहिताय व्यचरन् । अयं चाचार्यस्तेषु भगवच्चरणकमलसमाश्रयलक्षणमतिशयमात्मनोऽपि माननीयं भावयन्विशेषतः प्रेम बहुमानसम्मिश्रां दृष्टिमादधान आसीत् । अस्य चाचार्यस्य गृहानधिवसतोऽपि नैकं वा कर्म कामारम्भायाभूत्; येन वासनालेपदूषितं कर्म निबन्धाय भवेत् । परं सर्वमेव श्रीलक्ष्मीनारायणचरणपरिचर्यैकशेषभूतं पारमैकान्तिकधर्मप्रवर्तनैकान्तं सद्विद्याप्रवर्तनैक-

प्रयोजनं प्रशान्तिप्रधानं परमहंसानामप्यादरणीयमभूत्। अयं चाचार्यो भगवन्मूर्तिप्रतिष्ठापनेन तत्त्वनिबन्धनिर्माणेन चादेशं भगवतोऽनुपालयंस्तत्र तत्र भगवन्मूर्तीः प्रतिष्ठापयामास, चकार च बहूंस्तत्त्वहितपुरुषार्थैकान्तान्निबन्धान्। मन्दिरेषु प्राधान्येन वृत्तालये भगवतो लक्ष्मीनारायणस्य पार्श्वे द्वारकानाथस्य प्रतिष्ठामकारयत्। दुर्गपुरे च रेवतीबलदेवयोस्तथा कृष्णस्य। तथा धौलेय (धोलेरा) नगरे दुर्गपुरे (गढडा) जीर्णदुर्गे च (जूनागढ) भगवतो हरिकृष्णस्य प्रतिष्ठामकारयत्। स्तम्भनगरे च (खम्भात) कारयित्वा हरिमन्दिरं भगवन्तं हरिकृष्णं राधासनाथपार्श्वं कृष्णं च प्रतिष्ठापयामास। भृगुपुरे च (भरूच) श्रीकृष्णं रेवतीरमणं बलदेवं च प्रतिष्ठापितवान्। सूर्यनगरे च (सूरत) नारायणमुने राधाकृष्णस्य चार्चां प्रतिष्ठापयामास। मोहमय्यां (मुंबई) भगवन्तं हरिकृष्णं गोलोकविहारिणं च राधासमाश्लिष्टपार्श्वं प्रतिष्ठापयामास। निमाडदेशे च धराख्ये (धरगाम) ग्रामे च भगवतो नारायणस्य प्रतिष्ठामकारयत्। वरयानाख्ये नगरे (बुरानपूर) लक्ष्मीनारायणार्चां हरिकृष्णार्चां च यथाविधानं प्रतिष्ठापयामास। सावद्ानपुरे (सावदा) राधाकृष्णार्चां प्रतिष्ठापितवान्। सौराष्ट्रदेशे मणिभद्राभिधे पुरे (माणावदर) भगवन्मन्दिरं कारयित्वा भगवन्तं हरिकृष्णं प्रतिष्ठापयामास। ऊनाख्ये ग्रामे बालमुकुन्दस्य प्रतिष्ठामकारयत्। तत्र तत्र प्रतिष्ठामहोत्सवे यश्च हरिभक्तानामादरातिशयः, यच्च प्रतिष्ठाविधानेऽप्रस्खलितं तत्तद्वैदिकं कर्म, विप्राणां च सहस्राधिकानां भोजनदक्षिणादिसन्मानानं सर्वमेव तत् भगवतः सहजानन्दस्य समय इव लेशतोऽप्यन्यूनमभूत्। अस्य चाचार्यस्य प्रशान्तपावनेन स्वभावेन सत्सङ्गसम्पत्तिरनुदिनमनुवर्धमाना नानादिगन्तेषु व्याप्ताऽभवत्।

अनेन विरचिता निबन्धाः—द्वादशस्कन्धात्मको हरिलीलाकल्पतरुः। यत्र भगवतः सहजानन्दस्य चरितं विस्तृतमनुवर्ण्यते (१) सर्वमङ्गलव्याख्या भावप्रबोधिन्याख्या (२) जनमङ्गलटीका भावार्थप्रकाशिकाख्या (३) शिक्षापत्रीभाष्यम् (४) श्रीहरिवाक्यसुधासिन्धोः सेतुमालाव्याख्या (५) इदं च श्रीहरिरहस्ययाचनस्तोत्रम् (६) एवमयमाचार्यो निबन्धमुखेन भगवन्मन्दिरस्थापनामुखेन सदुपदेशाधानेन च चिरं विधायौद्धवसम्प्रदायप्रवृद्धिम्। वयसि चरमे सञ्जातात्मारामतैकरुचिः सर्वमारम्भं बाह्यं परिहरन्नध्यारोपयंश्चाचार्यपदमन्यस्मिन्नात्मनैवोपनीतमाबाल्यादाहितसद्विद्याभ्यासं भ्रातुः पुत्रं निजतनयभावेन स्वीकृतं भगवत्प्रसादाचार्यमाचार्यपदेऽभिषिच्य स्वयं समुपरुद्धबाह्येन्द्रियप्रवृत्तिः सर्वान्तरात्मनि भगवति पुरुषोत्तमे मनः समाधाय तत्प्रणिधानैकपरो बभूव। अथ कालेनात्मनः कलेवरं जीर्णमिव वासःखण्डं सुखेन परित्यजन् सर्वान्वर्णिनः साधूनात्मनश्चरणकमलसमाश्रयांश्चाहूय भगवतः सहजानन्दस्य चरणकमले समनुस्मरन्समयसमुचितान्सदुपदेशान्विधाय श्रीभगवत्प्रसादाचार्याय सम्प्रदायपरिपालनैक शेषभूतमाचार्यपदनिर्वहणमेव परमं धर्ममावेद्य (संवत् १९१९—माघशुक्लद्वितीयायां) प्रशान्तश्वासः प्रलीनः परे ब्रह्मणि परमानन्दमये परमं निर्वाणमविन्दत।

श्रीस्वामिनारायणाय नमो नमः

सनातनधर्मधुरंधरश्रीरघुवीराचार्यविरचितं

# श्रीहरिरहस्ययाचनस्तोत्रम्

सनातनधर्मधुरंधरश्रीविहारिलालाचार्यविरचितया

## सिद्धान्तोद्घाटिनी-समाख्यया सहितम्

श्रीकृष्णः पुरुषोत्तमः स्ववचनैः पीयूषसारोत्तमैर्भक्तेंद्रान्निजपादपंकजरतान् योऽवर्द्धयत्संततम् ।
ध्यात्वा भक्तिवृषात्मजं च तमहं तत्पादसेवाप्रदं स्तोत्रं चारुरहस्ययाचनमिदं संव्याकरोमीष्टदम् ॥
हरिवाक्यसुधासिंधुसेतुमालासमुद्धृतम् । रहस्ययाचनस्तोत्रं व्याकुर्वेऽहं यथामति ॥ २ ॥
तेन स श्रीहरिकृष्णः प्रीयतां प्रपितामहः । पितामहश्च पिता मे मुन्याद्यास्तच्छ्रिता मयि ॥३॥
सिद्धांतोद्घाटिनी व्याख्या रचिता तदनुग्रहात् । उद्घाटयितुशीलेयं सार्था सिद्धांतमस्यतः ॥४॥

अत्रभवान्सर्वहेतुरवतारी श्रीपुरुषोत्तमः परब्रह्मपरमात्मा श्रीकृष्णो धाम्न्यक्षर-पुरुषराधारमाद्यनंतमुक्तवृंदसेवितपादपंकजः सन्सदा विराजतेतराम् । स एव स्वयं भगवान्स्वस्यैकांतिकभक्तेभ्यः स्वस्योत्तमोत्तमानुपमालौकिकमहानंदप्रदानायानंतजीवोपरि कृपां कृत्वा स्वैकांतिकपार्षदैः सहेहाविर्भूय श्रीसहजानंदस्वामिश्रीहरिस्वामिनारायणाद्यनंतनामभिः प्रसिद्धः सन्ननंतदिव्यमानवलीलाभिः स्ववचनामृतवर्षणैश्च तानवर्द्धयत् । शतानंदाद्या महाकवयस्तद्ग्रंथांश्च चक्रुस्तत्र तेन श्रीहरिवाक्यसुधासिंधुनामा संदर्भः कृतस्तस्य सेतुमालाऽभिधा टीका श्रीरघुवीराचार्येंद्रेण कृता तत्र तेन प्रतितरंगं तद्वार्त्तासारं समुद्धृत्य श्रीहरिप्रार्थना कृता तस्यास्तान् श्लोकानुद्धृत्य रहस्ययाचनस्तोत्रनामा ग्रंथस्तेनैव पृथक्कृतस्तद्व्याख्यां तदात्मजात्मजोऽहं विहारिलालाचार्यो यथामति लिखामि । अथैकेन श्रीरघुवीराचार्येन्द्रो मंगलपूर्वं प्रतिज्ञां विधाय तत्प्रारभते ।

श्रीहर्यंघ्र्योर्मनो धृत्वा स्तोत्रमेतल्लिखाम्यहम् ।
हरिवाक्यसुधासिंधुसेतुमालासमुद्धृतम् ॥ १ ॥

श्रीहरीति । अहं श्रीरघुवीराचार्यः । श्रीहरेरंघ्र्योः पदाब्जयोः । मनः । धृत्वा । हरिवाक्यसुधासिंधोरेतन्नाम्नो ग्रंथस्य सेतुमाला सेतुमालानाम्नी या टीका तस्याः सकाशात्समुद्धृतम् । एतद्रहस्ययाचनाख्यम् । स्तोत्रम् । लिखामि ॥ १ ॥

निःश्रेयसं कर्तुमिह प्रभुर्यो नृणां स्वदिव्यैश्चरितैश्चचार ।
प्रवर्त्तयन्भागवतं च धर्मं स श्रीहरिर्मे हृदये सदाऽस्तु ॥ २ ॥

अथादावुपोद्घातप्रकरणांतिमप्रार्थनाश्लोकं लिखति । निःश्रेयसमिति । प्रभुर्महासमर्थः । यः । श्रीसहजानंदस्वामी । इह नृलोके । नृणां स्वस्वकीयसंबंधाप्तजीवानाम् । निःश्रेयसमात्यंतिककल्याणम् । कर्तुम् । स्वस्य यानि दिव्यानि तैः । चरितैर्लीलाभिः । भागवतम् । धर्मम् । प्रवर्त्तयन्सन् । चचार धरणौ विचचार । श्रीसहजानंदस्वामिनामा । श्रीहरिः । मे श्रीरघुवीराचार्यनाम्नस्तत्पुत्रस्य मम । हृदये । सदा । अस्तु वसतु । च पादपूरणे । अत्र केचिच्चतुह्यादयोऽव्ययाः पादपूरणे ज्ञेयाः ॥ २ ॥

प्रश्नोत्तराणि यः कृत्वा स्वाश्रितान् सुखयंश्च तान् ।
धाम ब्रह्मपुरं स्वीयं प्रापयंतं हरिं भजे ॥ ३ ॥

प्रश्नेति । यः । प्रश्नोत्तराणि । सर्वसाधनेभ्योऽखंडं स्वमूर्त्तौ मनो योजनरूपकठिनसाधनमिति स्वमूर्त्तिध्यानांतरायकृद्यद्वस्तु सा माया विज्ञेयेति स्वभक्ता अंते चिन्मयदिव्यदेहं लब्ध्वा तार्क्ष्यादिवाहनमारुह्य गोलोकमध्यवर्त्तिब्रह्मधाम यांतीति बहुकालं सत्संगं कुर्वतोऽपि भक्तस्य स्वनिष्ठदुष्टस्वभावेन सत्सु दोषं कल्पयतोऽतः सत्संगे दृढा प्रीतिर्न जायते इत्यादीनि तानीत्यर्थः । कृत्वा मुन्यादिभिः सह विधाय । स्वाश्रितान्मुन्यादिस्वभक्तान् । सुखयन्सन् । तान् । स्वीयम् । ब्रह्मपुरम् । धाम । प्रापयति । तम् । हरिम् । भजे कायवाङ्मनोभिरहं भजामि ॥ ३ ॥

योंऽगं स्वैकांतभक्तेस्तु वैराग्यं भेदसंयुतम् ।
विप्रं स्वं प्राह स हरिर्देयान्मह्यं तदुत्तमम् ॥ ४ ॥

य इति । यः । स्वस्य यैकांतभक्तिस्तस्याः । तु तस्या एव । अंगमंगभूतम् । वैराग्यम् । अर्थात्तल्लक्षणमित्यर्थः । भेदैरुत्तममध्यमकनिष्ठप्रकारैः संयुतं सहितं यथा तथा । स्वं स्वभक्तेंद्रम् । विप्रं मयारामभट्टम् । प्राह प्रोवाच । सः । हरिः श्रीहरिः श्रीहरिकृष्णो भगवान् । उत्तमसुत्तमलक्षणाख्यम् । तद्वैराग्यम् । मह्यम् । देयात्प्रददातु ॥ ४ ॥

नानाविधोत्सवांश्चक्रे स्वलीलादर्शकान् हरिः ।
स्वेषां स्वध्यानसिद्ध्यै यो ध्येयो मेऽस्तु सदैव सः ॥ ५ ॥

नानेति । यः । हरिः । स्वस्य या लीलाश्चरित्राणि तासां दर्शकान्दर्शयितॄन् । नानाविधोत्सवान् । स्वेषां स्वभक्तानाम् । स्वस्य यद्ध्यानं तस्यसिद्ध्यै सिद्धये । चक्रे । अखंडं मन्मूर्त्ति

पश्यद्भिरपि मत्कृतोत्सवादयः सर्त्तव्या इति यः स्वभक्तानुवाचेत्यर्थः । स श्रीहरिः । मे मम । सदैव । ध्येयः । अस्तु ॥ ५ ॥

स्वस्य प्रीतिकरामीर्ष्यां तथाऽप्रीतिकरां तु यः ।
दृष्टांतेन निजानाह श्रीहरिः सोऽस्तु मे हृदि ॥ ६ ॥

स्वस्येति । यः । स्वस्य । प्रीतिकरां प्रसन्नताविधायिनीम् । तथा । अप्रीतिकराम् । ईर्ष्याम् । निजान्स्वभक्तान्प्रति । दृष्टांतेन । आह । सः । श्रीहरिः । मे । हृदि । अस्तु सदा वसतु ॥ ६ ॥

स्वमूर्त्तिचिंतनं नित्यं स्वान्प्राहात्याग्रहेण यः ।
चिंतये श्रीहरिं तं श्रीभक्तिधर्मसुतं सदा ॥ ७ ॥

स्वेति । यः । स्वान्स्वाश्रितान्प्रति । नित्यम् अत्याग्रहेण । स्वमूर्त्तेर्यच्चिंतनं ध्यानं तत् । प्राह । श्रीभक्तिधर्मसुतम् । तम् । श्रीहरिम् । सदा चिंतयेऽहं ध्यायामि ॥ ७ ॥

विवेकिनः स्वभक्तांश्च लक्षणैरविवेकिनः ।
यः प्राह स हरिर्देयाद्विवेकं तं तु मे दृढम् ॥ ८ ॥

विवेकिन इति । यः । विवेकिनः अविवेकिनश्च । स्वभक्तान् । लक्षणैः । प्राह । सः । हरिः । मे मह्यं तु । दृढम् । तं स्वोक्तम् । विवेकम् । देयात् ॥ ८ ॥

जीवादीनां लक्षणानि स्वस्य ब्रह्मपुरेशितुः ।
तत्त्वतो यो निजान्प्राह तं भजे भक्तिधर्मजम् ॥ ९ ॥

जीवेति । यः । निजान्स्वभक्तान्प्रति । तत्त्वतोऽन्वतिरेकत्वेन । जीवादीनां जीवेश्वर ब्रह्मणाम् । ब्रह्मपुरेशितुः स्वस्य च । लक्षणानि । प्राह । जीवेश्वरमायाब्रह्मपरब्रह्मणां परस्पर-वास्तवभेदं चाहेति ज्ञेयम् । भक्तिधर्मजम् । तं श्रीहरिम् । भजेऽहं भजामि ॥ ९ ॥

स्वेषां स्वैकांतभक्तेस्तु दृढताहेतुरीरितः ।
स्वेभ्यो येनास्तु तस्मिन्मे भक्तिरेकांतिकी हरौ ॥ १० ॥

स्वेषामिति । येन श्रीहरिणा । स्वेभ्यो मुन्यादिस्वभक्तेभ्यः स्वेषां स्वाश्रितानाम् । स्वस्य यैकांतभक्तिस्तस्याः । दृढताया यो हेतुरिंद्रियवृत्तीनां सर्वथा मायिकपदार्थेभ्यो वियोज्य स्वस्वकीयसेवायां योजनात्मकः सः । ईरितः प्रोक्तः । तस्मिन् । हरौ । मे मम तु । एकांतिकी । भक्तिः । अस्तु ॥ १० ॥

सुदृढो निश्चयो यस्य स्वीयो यस्य न तद्विधः ।
लक्ष्माह यस्तयोर्देयात्स हरिस्तं दृढं तु मे ॥ ११ ॥

सुदृढ इति । यस्य भक्तस्य । स्वीयः प्रत्यक्षस्वस्वरूपसंबंधीत्यर्थः । सुदृढः । निश्चयोऽस्ति च । यस्य च तद्विधः सुदृढस्वीयनिश्चयः । नास्ति । तयोर्भक्तयोः । लक्ष्म लक्षणम् । यः । आह । सः। हरिः सर्वावतारहेतुश्रीहरिः । मे मह्यं तु । दृढं यतः किमप्यधिकं न तथाविधं ब्रह्मपुरेशे प्रत्यक्षे स्वस्मिन्निष्ठाकर्त्तव्यतात्मकम् । तं निश्चयम् । देयात् ॥ ११ ॥

यो निःसीमातिशयितामाह स्वान्स्वकृपां प्रभुः।
कृतघ्नलक्षणोक्त्या तं दयाब्धिं श्रीहरिं भजे ॥ १२ ॥

य इति । प्रभुः । यः । निःसीमा निरवधिश्चासावतिशयिता सर्वोत्कृष्टा च ताम् । स्वान्स्वभक्तान्प्रति । कृतघ्नस्य यल्लक्षणं तस्य योक्तिस्तया । आह । दयाब्धिम् । तं श्रीहरिम् । भजेऽहं सेवे ॥ १२ ॥

स्वस्यैकांतिकभक्तत्वमिच्छता वासनाऽखिला ।
ह्रापिता येन स हरिर्नाशयत्वेव तां मम ॥ १३ ॥

स्वस्येति । स्वस्य । एकांतिकभक्तत्वम् । इच्छता स्वभक्तस्य वांछता येन श्रीहरिणा । अखिला । वासना । ह्रापिता वासनायाः क्षये सति भगवदेकांतिकभक्तत्वं स्यादिति प्रश्नोत्तरेण स्वाश्रितानां सा निरासितेत्यर्थः । सः । मम । तां मायिकविषयसंबंधिनीं वासनाम् । नाशयतु ह्रापयतु । एव ॥ १३ ॥

तत्त्वादिलक्ष्मोक्तिपूर्वं स्वधाम बृहदक्षरम् ।
यो निजानाह तस्मिन्मे भक्तिधर्मसुतेऽस्तु हृद् ॥ १४ ॥

तत्त्वेति । यः । तत्त्वादीनां पुरुषप्रकृतिकालमहदहंकारमनोबुद्धिशब्दस्पर्शरूपरसगंधाकाशवायुतेजोजलपृथ्व्यादीनां तत्त्वादीत्यादिशब्देन तेषां सर्गस्थितिलयानां च यानि लक्ष्माणि लक्षणानि तेषामुक्तिपूर्वं यथा तथा । बृहद्विशालम् । अक्षरमक्षरब्रह्माख्यम् । स्वधाम तत्स्वरूपमित्यर्थः । निजान् । आह । भक्तिधर्मसुते तस्मिन् श्रीहरौ । मे मम । हृन्मनः । अस्तु ॥ १४ ॥

स्वस्यांतर्यामिशक्त्या तु योऽनंतांडभवादिकृत् ।
जीवानां कर्मफलदः सुखं मे स हरिः क्रियात् ॥ १५ ॥

स्वस्येति । यस्तु । स्वस्य । अंतर्यामिशक्त्या । जीवानां प्रतिदेहं भिन्नानामेकैकत्वेन स्थितानां चात्मनाम् । कर्मफलदः सन् । अनंतांडभवादिकृदखिलब्रह्मांडोत्पत्तिस्थितिप्रलयकर्त्ताऽस्ति स सर्वकारणं श्रीपुरुषोत्तमाख्यः । हरिः श्रीस्वामिनारायणः । मे मह्यम् । सुखम् । क्रियात् ॥ १५ ॥

स्वभक्तत्यागिगृहिणोर्लक्ष्म स्वं भजतो गतिम् ।
देहांतेऽभजतश्चाह यः स मेऽस्तु हरिर्गतिः ॥ १६ ॥

स्वेति । यः स्वस्य भक्तौ यौ त्यागिगृहिणौ तयोः । लक्षणम् । स्वम् । भजतः । अभजतश्च जनस्य । देहांते । गतिं प्राप्तिं च । आह । भजत इत्यनेनात्रोक्तं स्वदासलक्षणमपि ज्ञेयम् । सः । हरिः । मे मम । गतिः सर्वथा प्राप्यः । अस्तु ॥ १६ ॥

स्वस्यैकांतिकभक्तस्य स्ववचःपालनादि यः ।
लक्ष्माह स हरिर्मह्यं देयात्स्वैकांतभक्तताम् ॥ १७ ॥

स्वस्येति । यः स्वस्य । एकांतिकभक्तस्य । स्ववचसां यत्पालनादिभगवत्तदुक्ता यथा वदेयुस्तथैव मया कार्यं तदात्मकम् । लक्ष्म । आह । स्वयं भगवांस्तदीयश्च यद्यद्वचनं वदेत्तत्तत्सर्वमेवावश्यं पालयेद्देतदेव तद्भक्तलक्षणमित्यवददित्यर्थः । हृदि भगवन्मूर्त्तौ धृतायां

तदृदर्शनेऽपि वैक्लव्यं नाप्नुयात्किंतु प्रत्यहं नवीनां श्रद्धां धारयेदित्यप्याह । सः । हरिः । मह्यम् । स्वस्य यैकांतभक्तता ताम् । देयात् ॥ १७ ॥

विवेकिनः स्वभक्तस्य लक्षणं तत्त्वतस्तु यः ।
प्राह देयाद्विवेकं मे भक्तिधर्मसुतः स तम् ॥ १८ ॥

विवेकिन इति । यः । विवेकिनः । स्वभक्तस्य । लक्षणम् । तत्त्वतस्तु याथार्थ्येनैव । प्राह । भक्तिधर्मसुतः । स श्रीहरिः । मे मह्यम् । तं स्वेन गदितम् । विवेकम् । देयात् ॥ १८ ॥

योऽपानुदत्स्वाश्रितेषु कुसंगाल्पं तु सर्वथा ।
कृपया श्रीहरिः पायात्कुसंगात्सर्वदा स माम् ॥ १९ ॥

य इति । यः । स्वाश्रितेषु । कुसंगाल्पं तु कुसंगस्य लेशमपि । सर्वथा । कृपया । अपानुदद्विनाशितवान् । सः श्रीहरिः । कुसंगात् । माम् । सर्वदा । पायाद्रक्षतु ॥ १९ ॥

शुद्ध्यशुद्ध्योरंतरस्य हेतूनामसतां सताम् ।
विषयाणां तु पंचानामुक्त्वा लक्ष्माणि तत्त्वतः ॥ २० ॥

शुद्धीति । अंतरस्यांतःकरणस्य । शुद्धिश्चाशुद्धिश्च तयोः । हेतूनां कारणभूतानाम् । सतां भगवत्तद्भक्तसंबंधिनाम् । असतां भगवत्तद्भक्तविमुखाधर्मिजनसंबंधिनां च । पंचानाम् । विषयाणां शब्दादीनाम् । लक्ष्माणि । तत्त्वतस्तु यथार्थतयैव । उक्त्वा ॥ २० ॥

सत्सु तेषु स्थापनेनाऽसतां तेषां च वर्जनात् ।
योऽरक्षत्स्वाश्रितान्स्वामी कृपया मां स रक्षतु ॥ २१ ॥

सत्स्विति । स्वाश्रितान् । सत्सु भगवत्तद्भक्तसंबंधिषु । तेषु सद्विषयेषु । स्थापनेन । असतां तद्विमुखाधर्मिजनसंबंधिनाम् । तेषामसद्विषयाणां च । वर्जनादसेवनात् । स्वाश्रितैरसद्विषयांस्त्याजयित्वेत्यर्थः । यः । स्वामी । अरक्षत्तान् रक्षितवान् । स स्वामी श्रीहरिः । माम् । कृपया । रक्षत्वसद्विषयेभ्यः पातु ॥ २१ ॥

सापेक्षतां स्वधर्मादिचतुर्णां यः परस्परम् ।
उक्त्वैकांतिकभक्तत्वहेतूनां स्वस्य तत्त्वतः ॥ २२ ॥

सापेक्षतामिति । यः । स्वस्य । एकांतिकभक्तत्वस्य ये हेतवस्तेषाम् । स्वधर्मादिचतुर्णाम् । आत्मनिष्ठाप्रीतिविरक्तिस्वधर्माणामित्यर्थः । तत्त्वतः । सहेतुकाम् । परस्परम् । सापेक्षतामपेक्षासहितत्वम् । उक्त्वा ॥ २२ ॥

दृढतामकरोत्तेषां दयया स्वाश्रितेषु सः ।
दत्तात्स्वैकांतभक्तिं मे भक्तिधर्मसुतो हरिः ॥ २३ ॥

दृढतामिति । दयया । स्वाश्रितेषु । तेषां स्वधर्मादिचतुर्णाम् । दृढताम् अकरोत् । भक्तिधर्मसुतः । सः हरिः । मे मह्यम् । स्वस्मिन् यैकांतभक्तिस्ताम् । दत्तात्प्रददातु ॥ २३ ॥

आत्मादिवीक्षणे स्वेषां प्रमादं तु प्रहाप्य यः ।
उद्योगं वर्द्धयामास मम सोऽस्तु हरिर्हृदि ॥ २४ ॥

आत्मेति । यः । स्वेषां स्वभक्तानाम् । आत्मादिवीक्षणे स्वात्मपरमात्मदर्शने । प्रमादं तु कर्त्तव्यात्कर्मणोऽन्यत्र प्रवृत्तिहेतुभूतानवधानत्वमेव । प्रहाप्य हापयित्वा । उद्योगमात्मपरमात्मदर्शनोद्यमम् । वर्द्धयामास । सः । हरिः । मम । हृदि । अस्तु ॥ २४ ॥

स्वधर्मादिदृढस्वोक्तिपूर्वं धामाऽक्षरं निजम् ।
प्राप्यं स्वैकांतिकैः प्राह यो हरिः सोऽस्तु मे गतिः ॥ २५ ॥

स्वेति । यः । स्वधर्मादीनां यद् दृढत्वं तस्योक्तिपूर्वं यथा तथा । स्वैकांतिकैः स्वैकांतभक्तैः । प्राप्यम् । निजम् । अक्षरम् । धाम । प्राह । स्वधर्मादियुक्तैकांतिकमद्भक्ता देहांते मद्धाम यांतीत्याहेत्यर्थः । सः । हरिः । मे मम । गतिः प्राप्यपदार्थः । अस्तु ॥ २५ ॥

स्वकीयध्यानसिद्ध्यै यो निजानां सर्वकर्मसु ।
स्मृतिं स्वमूर्त्तेस्तान्याह ध्येयः सोऽस्तु हरिर्मम ॥ २६ ॥

स्वकीयेति । यः निजानां स्वभक्तानाम् । स्वकीयध्यानसिद्ध्यै स्वमूर्त्तिध्यानसिद्धये । सर्वकर्मसु नवधा तद्भजनेषु दैहिकक्रियासु च । स्वमूर्त्तेः । स्मृतिम् । यत्स्वमूर्त्तिस्मरणक्षणं वदित्यर्थः । तान्भक्तान्प्रति । प्राह । सः हरिः । मम । ध्येयः अस्तु ॥ २६ ॥

स्वस्यैकांतिकभक्तत्वसाधनान्याह यो निजान् ।
स श्रीहरिस्तथात्वं मे दद्याद् भक्तिवृषात्मजः ॥ २७ ॥

स्वस्येति । यः । स्वस्य । एकांतिकभक्तत्वस्य यानि साधनानि तानि । निजान्प्रति । आह । भक्तिवृषात्मजः । सः श्रीहरिः । मे मह्यम् । तथात्वं सम्यगात्मनिष्ठया देहात्मबुद्धिं त्यक्त्वा स्वमूर्त्तौ सदा मनोधारणात्मकसाधनयुक्तत्वम् । दद्यात् ॥ २७ ॥

स्वस्यैकांतिकभक्तानां स्वस्य माहात्म्यबोधतः ।
उक्ता दृढा स्थितिर्येन स्वस्वरूपेऽक्षरात्परे ॥ २८ ॥

स्वस्येति । येन । स्वस्य । एकांतिकभक्तानाम् । स्वस्य । माहात्म्यस्य यो बोधः सम्यग् ज्ञानं तस्मात् । अक्षरात्परे स्वरूपस्वभावादिभिरक्षरब्रह्मणः श्रेष्ठे । स्वस्वरूपे दृढा । स्थितिः । उक्ता ॥ २८ ॥

तारतम्यं च सफलं स्वमाहात्म्यस्य तत्त्वतः ।
येनोक्तं श्रीहरौ तस्मिन्सुदृढा रतिरस्तु मे ॥ २९ ॥

तारतम्यमिति । येन च । तत्त्वतः सहेतुकम् । अत एव सफलं फलसहितम् । स्वमाहात्म्यस्य । तारतम्यम् । उक्तम् । स्वमाहात्म्यज्ञानानुसारेण भगवति स्वस्मिन्भक्तस्य स्थितिरुक्तेत्यर्थः । तस्मिन् । श्रीहरौ । मे मम । सुदृढा । रतिः प्रीतिः । अस्तु ॥ २९ ॥

स्वभक्तस्य स्वधर्मेण युक्तस्याऽपूर्णकामता ।
स्वस्य माहात्म्यबोधेन निरस्ता चात्मनिष्ठया ॥ ३० ॥
युक्तियुग्वचनैर्येन स्वभक्तानां हितेच्छुना ।
चित्ते स श्रीहरिर्मेऽस्तु भक्तिधर्मसुतोऽन्वहम् ॥ ३१ ॥

स्वेति । युक्तीति । स्वभक्तानाम् । हितेच्छुना । येन श्रीहरिणा । स्वधर्मेण । युक्तस्य । स्वभक्तस्य । अपूर्णकामता । युक्तियुग्वचनैः । स्वस्य । माहात्म्यबोधेन । आत्मनिष्ठया च निरस्ता । परमार्थनिरुपमस्ववचोयुक्तिभिः साधनद्वयेनापूर्णकामता निरस्यतीति येनोक्तमित्यर्थः । भक्तिधर्मसुतः । सः । श्रीहरिः । मे मम । चित्ते । अन्वहम् । अस्तु स्थिरो भवतु । इति द्वयोरेकान्वयः ॥ ३०–३१ ॥

रसिकत्वं स्वभक्तानां सकलेंद्रियवृत्तिभिः ।
स्वस्वरूपे सर्वथोक्तं स्वप्ने जाग्रति येन च ॥ ३२ ॥
मायिकार्थनिषेधोक्तिपूर्वं स्वीयहितेच्छुना ।
स श्रीहरिः स्वमूर्त्तौ मे दत्ताद्रसिकतां सदा ॥ ३३ ॥

रसिकत्वमिति । मायिकेति । स्वीयानां भक्तानां हितेच्छुना । येन । मायिकार्थानां प्राकृतविषयाणां निषेधोक्तिपूर्वं यथातथा । जाग्रति स्वप्ने च । स्वभक्तानाम् । सकलेंद्रियवृत्तिभिः स्वस्वरूपे । सर्वथा कायवाङ्मनोभिः । रसिकत्वं परमार्थरसज्ञत्वम् । उक्तम् । सः । श्रीहरिः । मे मह्यम् । सदा । रसिकताम् । दत्तात् । इति द्वयोरेकान्वयः ॥ ३२–३३ ॥

स्वभक्तानां हृदि स्वस्य निवासो येन स्याद् ध्रुवम् ।
तज्ज्ञानं येन संप्रोक्तं देयात्तन्मे हरिः स हि ॥ ३४ ॥

स्वेति । येन परमार्थज्ञानोपदेष्ट्रा सत्पतिना । स्वभक्तानाम् । हृदि । स्वस्य ध्रुवमचलः । निवासः । येन ज्ञानेन । स्याद्भवेत् । तद्धि तदेव । ज्ञानम् । ज्ञानेन स्वस्मिन्स्थितिमतां स्वैकांतिकानां सतां लक्षणं चेत्यर्थः । संप्रोक्तम् । सः । हरिः । मे मह्यम् । तद् ज्ञानम् । देयात् ॥ ३४ ॥

यः स्वभक्तो न सत्संगात्पतेद्यश्च पतेत्तयोः ।
उक्तानि येन लक्ष्माणि स हरिर्मेऽस्तु मानसे ॥ ३५ ॥

य इति । येन दोषेभ्यः स्वांस्त्रायता भगवता । यः । स्वभक्तः । सत्संगात् । न पतेद्विमुखो न भवेत् । यश्च भक्तः । पतेत्सत्संगाद् भ्रंश्येत् । तयोः । लक्ष्माणि । उक्तानि । सः । हरिः । मे मम । मानसे । अस्तु ॥ ३५ ॥

स्वभक्तानां स्वभक्तेस्तु सांगाया बलवृद्धिकृत् ।
तस्याः शातनकृद्यच्च संस्कारादित्रयं तथा ॥ ३६ ॥
अतःकरणशुद्धित्वे हेतुत्वे नास्ति यच्च तत् ।
येनोक्तं स हरिर्मेऽस्तु भक्तिधर्मसुतो हृदि ॥ ३७ ॥

स्वभक्तानामिति । अंतरिति । येन तत्त्वतः स्वस्वकीयमाहात्म्यं ज्ञापयता सर्वांतर्यामिणा । स्वभक्तानाम् । सांगायाः स्वधर्मज्ञानवैराग्यरूपांगसहितायाः । स्वभक्तेः । बलस्य या वृद्धिस्तां करोतीति तथोक्तम् । तथा । तस्याः स्वभक्तेः । शातनकृद्विनाशकृच्च । यत् सदसद्देशकालसंगक्रियेति चतुष्टयमस्ति । तथा । अंतःकरणशुद्धित्वे । हेतुत्वेन । संस्कारादित्रयं

संस्कारहरिकृपापौरुषेति त्रिकम् । यच्चास्ति । तत् । उक्तम् । भक्तिधर्मसुतः । सः । हरिः । मे मम । हृदि हृदयारविंदे । अस्तु वसतु ॥ ३६-३७ ॥

हरिसंकल्पसंस्कारभावाभावत्वयोस्तु यत् ।
स्वभक्तानां कारणं तन्निवृत्तेः साधनं च यत् ॥ ३८ ॥

हृदीति । स्वभक्तानाम् । हृदि मनसि । संकल्पानां जातमनोरथानां यः संस्कारो वासना तस्य भावो भवनमभावो न भवनं च तयोर्भावौ तत्त्वे तयोस्तु । कारणम् । यदस्ति । तेषां संकल्पानां या निवृत्तिस्तस्याः । साधनं च । यदस्ति ॥ ३८ ॥

तत्तेभ्यः कृपया प्राह यो विविच्यैव तत्त्वतः ।
दद्यादेकांतिकीं भक्तिं स हरिर्मे निजां सदा ॥ ३९ ॥

तदिति । तत् । तेभ्यो भक्तेभ्यः । कृपया । यः । विविच्य विवेचनां कृत्वैव । तत्त्वतः । प्राह । सः । हरिः । मे मह्यम् । निजाम् । एकांतिकीम् । भक्तिम् । सदा । दद्यात् ॥ ३९ ॥

ज्ञेयं यत् स्वस्य भक्तानां प्रश्नोत्तरमुखेन तत् ।
अवश्यं येन संप्रोक्तं स हरिर्मेऽस्तु मानसे ॥ ४० ॥

ज्ञेयमिति । येन । स्वस्य भक्तानाम् । अवश्यम् । यत् । ज्ञेयं यो वाचाप्यन्येषामपीडकोऽपि भगवत्तद्भक्तभक्तिहीनोऽस्ति तस्मात्तत्तदीयभक्तिमान् श्रेष्ठस्तत्तदीयगुणेषु दोषदर्श्यसुरः प्रत्यक्षभगवतो निश्चयाज्ञापालनाभ्यामेव भक्तानां महत्त्वमित्यादि वेद्यम् । तत् । प्रश्नोत्तरमुखेन । संप्रोक्तम् । सः । हरिः । मे । मानसे । अस्तु ॥ ४० ॥

भोग्यार्थेषु स्वभक्तानामभक्तानां च पंचसु ।
भेदत्वं यत्स्वभक्तानामंतरे हेतुता च या ॥ ४१ ॥
स्वध्यानस्य सिद्ध्यसिद्ध्योस्ते विविच्यैव तत्त्वतः ।
येनोक्ते मे हरौ तस्मिन्भक्तिरूपाऽस्तु शेमुषी ॥ ४२ ॥

भाग्येति । स्वेति । येन । स्वभक्तानाम् । अभक्तानां च । पंचसु । भोग्यार्थेषु विषयेषु । यत् । भेदत्वं पृथक्त्वम् । स्वभक्तानाम् । अंतरेऽतःकरणे । स्वस्य यद् ध्यानं तस्य । सिद्धिश्चासिद्धिश्च तयोः । या च । हेतुता कारणता । ते द्वे । विविच्यैव । तत्त्वतः सिद्धांतत्वेन । उक्ते । तस्मिन् । हरौ । मे । भक्तिरूपा । शेमुषी बुद्धिः । अस्तु ॥ ४१-४२ ॥

स्वस्याश्रयश्चतुर्द्धोक्तो जीवकल्याणकारकः ।
येन स श्रीहरिर्दद्यान्मह्यं तुर्यं स्वमाश्रयम् ॥ ४३ ॥

स्वस्येति । येन । जीवकल्याणकारकः । स्वस्य । आश्रयः । चतुर्द्धा वैश्वासिकस्वार्थिकस्नैहिकज्ञानिकेति चतुर्भिः प्रकारैः । उक्तः । सः । श्रीहरिः । मह्यम् । स्वं स्वकीयम् । तुर्यंयथार्थतन्माहात्म्यज्ञानेन कृतम् । आश्रयम् । दद्यात् ॥ ४३ ॥

स्वभक्तचित्तं स्वं हित्वा तुच्छेऽर्थेऽन्यत्र सक्तताम् ।
व्रजेत्तत्कारणं तेषां क्लेशाप्तौ कारणं च यत् ॥ ४४ ॥

स्वभक्तेति । स्वभक्तानां चित्तम् । स्वं महानंदनिधिं स्वम् । हित्वा त्यक्त्वा । अन्यत्र स्वस्मादितरत्र । तुच्छे साररहिते । अर्थे पदार्थे । सक्ततामासक्तिम् । व्रजेत् तस्य कारणम् । तेषां स्वभक्तानाम् । क्लेशस्य याऽऽप्तिः प्राप्तिस्तस्यां च । यत् । कारणम् ॥ ४४ ॥

ते येन विस्तरात्प्रोक्ते आनंदनिधिना स्फुटम् ।
स श्रीहरिः सदा मेऽस्तु भक्तिधर्मसुतो हृदि ॥ ४५ ॥

ते इति । ते द्वे कारणे । आनंदनिधिना । येन । स्फुटं यथा तथा । विस्तरात् । प्रोक्ते । भक्तिधर्मसुतः । सः । श्रीहरिः । सदा । मे । हृदि । अस्तु ॥ ४५ ॥

वहुबुद्धेः स्वभक्तस्य श्रेयोऽध्वन्यस्थितौ तु यः ।
तस्मिंस्तस्याल्पबुद्धेर्यः स्थितौ हेतुर्भवेत्तथा ॥ ४६ ॥

बहुबुद्धेरिति । बहुबुद्धेः । स्वभक्तस्य । श्रेयोऽध्वनि मोक्षमार्गे । अस्थितौ । यः । हेतुः भवेदस्ति । तथा । अल्पबुद्धेः । तस्य स्वभक्तस्य । तस्मिन् श्रेयोऽध्वनि । स्थितौ । यश्च । हेतुः । भवेदस्ति । तु चार्थे ॥ ४६ ॥

त्यागोपायश्च दुर्बुद्धेर्यस्तेषां यो निरूपणम् ।
चक्रे स्वभक्तौ स हरिर्मम विघ्नमपक्रियात् ॥ ४७ ॥

त्यागेति । दुर्बुद्धेः । त्यागोपायश्च । योऽस्ति । तेषां त्रयाणाम् । निरूपणम् । यः । चक्रे । सः । हरिः । मम । स्वभक्तौ । विघ्नम् । अपक्रियाद्दूरतात् ॥ ४७ ॥

यथा सर्वात्मना भाव्यं त्यागिना स्वाश्रितेन तु ।
तथा यः प्राह स हरिः स्वस्मिन्प्रेम ददातु मे ॥ ४८ ॥

यथेति । यो निष्किंचनप्रियतया प्रसिद्धो भगवान् । स्वाश्रितेन । त्यागिना त्यागिनामाश्रमस्थब्रह्मचारिसाधुपदातिभिरित्यर्थः । सर्वात्मना कायवाङ्मनोवर्त्तनैः । यथा येन प्रकारेण । भाव्यम् । तथा । प्राह । त्यागिभक्तेन वस्त्रादितुच्छपदार्थे प्रीतिं त्यक्त्वा साक्षात्कृष्णे मयि प्रीतिः कार्येत्याहेत्यर्थः । सः । हरिः । मे मह्यम् । स्वस्मिन् । प्रेम स्नेहम् । ददातु ॥ ४८ ॥

साधुमेकांतिकं स्वस्य स्वप्रेष्ठं लक्षणोक्तितः ।
यः प्राह स हरिः प्रीतो मय्यस्त्वेकांतिकप्रियः ॥ ४९ ॥

साधुमिति । यस्त्यक्तदेहदैहिकस्नेहः भक्तः प्रेष्ठतया प्रसिद्धः श्रीहरिः । स्वप्रेष्ठम् । स्वस्य एकांतिकम् । सांगसमाहात्म्यज्ञानस्वभक्तिं कुर्वंतमित्यर्थः । साधुं स्वभक्तम् । लक्षणोक्तितः लक्षणकथनेन । प्राह । आत्मज्ञानेन देहात्मबुद्धिं त्यक्त्वा मद्भक्तेन मदेकधर्मः संपाद्य इत्यब्रवीदित्यर्थः । एकांतिकाः । स्वस्मिन्ननन्यनिष्ठावंतो भक्ताः प्रिया वल्लभा यस्य तथोक्तः सः । हरिः । मयि रघुवीराख्यस्वपुत्रे । प्रीतः प्रसन्नः । अस्तु ॥ ४९ ॥

रीतिं निर्वासनत्वादेर्यः स्वेषां वर्त्तनस्य तु ।
विस्तरात्कृपया प्राह सोऽस्तु मद्धृदये हरिः ॥ ५० ॥

रीतिमिति । यः प्रतिदिनसत्संगिजनकार्यविचारशिक्षकस्तत्स्थजगद्वासनानिरसनचरित्रः श्रीहरिः । स्वेषां स्वभक्तानाम् निर्वासनत्वादेः स्वचरित्रचिंतनैर्मनोनिर्वासनकारणादेः । वर्त्तनस्य

रीतिम् । कृपया । विस्तरात् । प्राह । आत्मनः स्वरूपं चार्हेति तु शब्दो ज्ञापयति । सः । हरिः । मम यद्धृदयं तस्मिन् । अस्तु ॥ ५० ॥

मतांतरनिरासार्थं स्वभक्तानां द्विधा स्थितम् ।
दृष्टांतोक्त्याऽऽह यस्तस्मिन् हरौ मेऽस्तु सदैव हृद् ॥ ५१ ॥

मतांतरेति । यः । मतांतरस्य शुष्कवेदांतिसंमतसिद्धांतस्य निरासार्थं सज्जनमनस्तो विनाशार्थम् । भक्तानाम् । द्विधा सविकल्पनिर्विकल्पे तद्द्विप्रकाराम् । स्थितिम् । दृष्टांतानां योक्तिस्तया । आह । तस्मिन् हरौ । मे । हृच्चित्तम् । सदैव । अस्तु निवासं करोतु ॥ ५१ ॥

सविकल्पं निर्विकल्पं समाधिमास्थितास्तु ये ।
स्वभक्तास्तल्लक्षणानि येनोक्तानि समासतः ॥ ५२ ॥

सविकल्पमिति । येन । सविकल्पम् । निर्विकल्पं च । समाधिम् । आस्थिता आश्रिताः ये स्वभक्ताः । तेषां यानि लक्षणानि तानि समासतः संक्षेपेण । उक्तानि ॥ ५२ ॥

भक्तेरुपासनायाश्च स्वस्य भेदोऽपि येन तु ।
वर्णितः स हरिर्भक्तिं दद्यात्स्वैकांतिकीं तु मे ॥ ५३ ॥

भक्तेरिति । येन च । स्वस्य । भक्तेः । उपासनायाश्च । भेदोऽपि । वर्णितः । सः । हरिः । मे मह्यं तु । स्वैकांतिकीम् । भक्तिम् । दद्यात् ॥ ५३ ॥

स्वस्यांतर्यामिशक्त्यैवाऽक्षरादिष्वन्वयः स्फुटम् ।
बहु स्यामिति वेदांतवाक्यार्थोक्त्या समीरितः ॥ ५४ ॥
कारणानां कारणेन परेण ब्रह्मणोऽक्षरात् ।
येन स श्रीहरिर्मेऽस्तु स्वसेवादायकः सदा ॥ ५५ ॥

स्वस्येति । कारणानामिति । अक्षरादक्षराख्यात् । ब्रह्मणो ब्रह्मधाम्नः सकाशात् । परेण श्रेष्ठेन । तदधिपतिनेत्यर्थः । कारणानां महामायामहापुरुषादीनाम् । कारणेन । येनावतारिश्रीपुरुषोत्तमेन । अक्षरादिष्वक्षरब्रह्मादिसर्वेषु । अंतर्यामिशक्त्या एव । स्वस्य । अन्वयः । स्फुटं यथा तथा । बहु स्यामिति । बहु स्यां प्रजायेयेति । वेदांतस्य छांदोग्योपनिषदि यद्वाक्यं तस्यार्थस्य योक्तिस्तया । सम्यगीरित उक्तः । सः । श्रीहरिः । मे मह्यम् । सदा । स्वसेवादायकः । अस्तु ॥ ५४-५५ ॥

असन्मतं निराकृत्य शुष्कवेदांतिसंमतम् ।
योऽस्थापयत्सन्मतं स्वं स हरिर्माऽसतोऽवतु ॥ ५६ ॥

असदिति । यो विधिनिषेधयोः सत्यत्वेन प्रतिपादकतया प्रसिद्धः स्वयं भगवान् । शुष्कवेदांतिभिः संमतम् । असन्मतम् । निराकृत्य प्रमाणार्पणपूर्वकं खंडयित्वा । स्वं स्वकीयम् । सन्मतं शुद्धवेदांतगोचरस्वसिद्धांतम् । अस्थापयत् । सः । हरिः । असतोऽसन्मतात् । मा माम् । अवतु रक्षतु ॥ ५६ ॥

स्वसेवानिरतान्मुक्त्यादीच्छाविरहितान्निजान् ।
श्रेष्ठान् यः प्राह स हरिः स्वीयां सेवां ददातु मे ॥ ५७ ॥

स्वेति । यो निष्कामभक्तश्रेष्ठतया प्रसिद्धः । स्वसेवायां निरतान्प्रीतियुक्तान् । मुक्त्यादीनां सालोक्यादिचतुर्द्धामुक्तीनामिच्छया विरहितान् । अत एव । श्रेष्ठान् । निजान्स्वभक्तान् । प्राह । सः । हरिः । मे मह्यम् । स्वीयाम् । सेवाम् । ददातु ॥ ५७ ॥

स्नेहस्य लक्षणं स्वस्मिन्स्वभक्तानां च साधनम् ।
तत्प्राप्तेर्देहगेहादौ तथाऽहंताममत्वयोः ॥ ५८ ॥
नाशे च तत्संकल्पानां साधनं येन विस्तरात् ।
उक्तं स श्रीहरिर्दद्यात्स्वप्रियां साधुतां तु मे ॥ ५९ ॥

स्नेहस्येति । नाश इति । येन निरवधिकातिशयसाधुतायाः सीमाभूतेन परमेश्वरेण । स्वभक्तानाम् । स्वस्मिन् । स्नेहस्य । लक्षणम् । तथा । तस्य स्वस्मिन्स्नेहस्य या प्राप्तिस्तस्याः । साधनं च । तथा । देहगेहादौ स्वशरीरतत्संबंधिगृहादौ । आदिशब्देन पुत्रपौत्रादौ च । अहंता च ममत्वं च तयोः । संकल्पानाम् । नाशे विनाशकरणे च । साधनम् । एतत्त्रयमित्यर्थः । विस्तरात् । उक्तम् । सः । श्रीहरिः । मे मह्यम् । स्वप्रियाम् । साधुताम् । दद्यात् । स्वस्मिन्नसाधारणस्नेहं च दद्यादिति तुशब्दो द्योतयति ॥ ५८-५९ ॥

स्वस्य ब्रह्मपुरे धाम्नि सदा दिव्याकृतेः स्फुटम् ।
निरूपणं कृतं येन उपास्योऽस्तु स मे हरिः ॥ ६० ॥

स्वस्येति । येन सदैव दिव्यसाकारमूर्त्तिः सन्स्वांगनिर्यत्स्वब्रह्मतेजसाऽक्षरादेसर्वेषु व्याप्तेन परब्रह्मणा । ब्रह्मपुरे ब्रह्मपुराख्ये । धाम्नि । सदा दिव्याकृतेः सदैव दिव्यालौकिकपुरुषाकृतितया वसतः । स्वस्य । स्फुटं यथा तथा । निरूपणम् । कृतम् । सः । हरिः । मे । उपास्यः सर्वथाऽऽराधनीयः । अस्तु ॥ ६० ॥

स्वभक्तानां समाधौ तु यथाऽऽकाशस्य लीनता ।
जायते सा यथा नैव जायते तत्त्वतस्तथा ॥ ६१ ॥
विप्रप्रश्नोत्तरोक्तौ तां य उवाच सविस्तरम् ।
स हरिर्ब्रह्मधामेशो भक्तिपुत्रोऽस्तु मद्धृदि ॥ ६२ ॥

स्वेति । विप्रेति । यः यो वेत्ति युगपत्सर्वं प्रत्यक्षेण सदा स्वत इत्यादिश्रुत्युक्तसर्वज्ञः स्वयं भगवान् । समाधौ तु । आकाशस्य । लीनता । यथा येन प्रकारेण । जायते । तथा । साऽऽकाशस्य लीनता । यथा । न जायते । तामाकाशस्य लीनतामलीनतां च । अत्र ते इति पाठः समंजसः । विप्रस्य राजकूटपुरीयमाहेश्वराख्यब्राह्मणस्य यः प्रश्नस्तस्य यदुत्तरं तस्योक्तौ । सविस्तरं यथा तथा । उवाच । ब्रह्मधाम्न ईशः स्वामी । भक्तिपुत्रः श्रीधर्मदेवांगनाप्रेमवतीनंदनः । सः । हरिः । मद्धृदि । अस्तु स्थिरतां प्राप्नोतु । इति ॥ ६१–६२॥

स्वस्यैकांतिकभक्तानां गुणधर्मोदयस्तु ये ।
चत्वारो वर्त्तनं तेषां गौणमुख्यतया स्फुटम् ॥ ६३ ॥

स्वस्येति । स्वस्य । एकांतिकभक्तानाम् । धर्मादयः । चत्वारः । गुणाः । तेषां धर्मज्ञानवैराग्यभक्तीनाम् । गौणमुख्यतयांऽगप्रधानभावेन भक्तेष्विति शेषः । स्फुटं सर्वजनप्रसिद्धं यथा तथा । यद्वर्तनं च ॥ ६३ ॥

पृथक्पृथग्लक्षणैस्तु कृपया येन वर्णितम् ।
स हरिर्मे निजां भक्तिं ददात्वेकांतिकीं सदा ॥ ६४ ॥

पृथगिति । पृथक्पृथग्लक्षणैः । येन । कृपया । वर्णितं ते तद्वेति द्वयं निरूपितम् । सः । हरिः । मे मह्यम् । सदा । एकांतिकीम् । भक्तिम् । ददातु ॥ ६४ ॥

स्वभक्तैः पूजनं कृत्वा स्वयं प्रार्थ्यो यथाऽन्वहम् ।
तानुवाच तथा यो मां स हरिः सर्वतोऽवतु ॥ ६५ ॥

स्वेति । यः सदा सर्वथा पूजनीयः प्रभुः । स्वभक्तैः । अन्वहम् । पूजनं स्वार्चनम् । कृत्वा । यथा । स्वयम् । प्रार्थ्यः स्वस्य प्रार्थना तैः कर्त्तव्येत्यर्थः । तथा । तान्स्वभक्तान्प्रति । उवाच । सः । हरिः । माम् । सर्वतः सर्वकुसंगेभ्यः कामक्रोधादिसर्वदोषेभ्यश्च । अवतु रक्षतु ॥ ६५ ॥

स्वस्मिन् सदा मनोवृत्तेर्धारणं भक्तलक्षणम् ।
तदुपायं च यः प्राह स हरिर्मेऽस्तु मानसे ॥ ६६ ॥

स्वस्मिन्निति । यो ब्रह्मभावापन्नानां मनोऽनिरंजनचिदानंदादिदिव्यसद्गुणपारावारः । स्वस्मिन् । मनोवृत्तेः । सदा धारणमेव । भक्तलक्षणम् । तदित्यर्थः । तस्य स्वस्मिन्मनोधारणस्योपायं च । प्राह । सः हरिः । मे । मानसे । अस्तु ॥ ६६ ॥

कुशाग्रबुद्धीन्स्वान्भक्तान् स्वाभक्तान् स्थूलधीमतः ।
यः प्राह स हरिः कुर्यात्कुशाग्रमतिमेव माम् ॥ ६७ ॥

कुशाग्रेति । योऽतिसूक्ष्मबुद्धिभिर्दैवीसंपदाढ्यैर्मुमुक्षुभिर्ज्ञेयः प्राप्यश्च प्रभुः । कुशाग्रवत्सूक्ष्मा बुद्धिर्येषां तान् । स्वान्स्वकीयान् । भक्तान् । स्थूला धीर्विद्यते एषां तयोक्तान् । स्वस्याभक्तांश्च । प्राह । सः । हरिः । माम् । कुशाग्रमतिं यया समाहात्म्ययथार्थनिर्विकल्पास्युत्तमस्वस्वरूपनिश्चयं प्राप्नुयां तथाविधमतिमंतम् । कुर्यात् ॥ ६७ ॥

करणैर्मायिकैः स्वस्याऽग्राह्यत्वं तैरमायिकैः ।
ग्राह्यत्वं यः स्वयं प्राह स हरिर्मेऽस्तु दृक्पथे ॥ ६८ ॥

करणैरिति । यः प्रश्नं वर्द्धयित्वा सुस्पष्टं कुर्वंस्तदुत्तरप्रदोंऽतरात्मा स्वयम् । मायिकैर्मायाकार्याज्ञानावरितैः । करणैर्बाह्यांतरेंद्रियैः । स्वस्य स्वस्वरूपस्य । अग्राह्यत्वमज्ञेयत्वम् । अमायिकैः सत्समागमेन विनष्टाज्ञानैः तैर्बाह्यांतःकरणैः । ग्राह्यत्वं यथार्थस्वस्वरूपज्ञेयत्वं प्राह । सः । हरिः । मे दृक्पथे । अस्तु सदा वर्त्तताम् ॥ ६८ ॥

शास्त्रैश्चतुर्भिः सांख्याद्यैः स्वस्य पूर्णं तु वेदनम् ।
येनोक्तं श्रीहरिः सोऽस्तु वेद्यः पूर्णतयैव मे ॥ ६९ ॥

शास्त्रैरिति । येन सच्छास्त्रप्रतीतिरहितैर्ज्ञातुमशक्यतया प्रसिद्धेन परब्रह्मणा । सांख्याद्यैः सांख्ययोगवेदांतपंचरात्राभिधैः । चतुर्भिः । शास्त्रैः । स्वस्य । पूर्णं यथार्थम् । वेदनं ज्ञानम् । उक्तम् । सः । श्रीहरिः । मे । पूर्णतया । एव । वेद्यो विज्ञेयः । अस्तु ॥६९॥

गुणवृद्धौ स्वभक्तानां कारणं च गुणक्षये ।
येनोक्तं स हरिर्दद्यात्स्वधर्मादीन् गुणांस्तु मे ॥ ७० ॥

गुणेति । येन सद्गुणमणिखनिभूतेन । स्वभक्तानाम् । गुणानां धर्मज्ञानादीनां या वृद्धिस्तस्याम् । गुणानां यः क्षयस्तस्मिंश्च । कारणम् । उक्तम् । स्वस्वकीयगुणग्राहिणि गुणा वर्द्धन्ते तद्दोषग्राहिणि ते क्षयंति चेति हेतुरुक्त इत्यर्थः । सः । हरिः । मे मह्यम् । स्वधर्मादीन् । दद्यात् । स्वभक्तदोषलेशोऽपि मद्बुद्धौ नायायादिति कृपां च कुर्विति तुशब्दार्थः ७०॥

स्वभक्तानां भागवतधर्मपुष्टौ तु साधनम् ।
मोक्षद्वारापावृतत्वे साधनं यद् भवेत्तथा ॥ ७१ ॥

स्वेति । स्वभक्तानाम् । भागवतधर्मस्य या पुष्टिः पोषणं तस्याम् । यत् । साधनम् । तथा । मोक्षद्वारस्य यदपावृतत्वमुद्घाटितकपाटत्वं तस्मिन् । यत् । साधनम् । भवेत् ॥७१॥

आपद्यपि चलेन्नैव यः स्वभक्तः स्वधर्मतः ।
तल्लक्ष्म यच्च तत्प्राह यो हरिः सोऽस्तु यद्धृदि ॥ ७२ ॥

आपदीति । यच्च । आपदि । अपि । यः स्वभक्तः । स्वधर्मतः सकाशात् । नैव । चलेद् भ्रश्येत् । तस्य लक्षणम् । तत्सर्वं तदित्यर्थः । यः । प्राह । सः । मद्धृदि । अस्तु ॥ ७२ ॥

स्वभक्तस्याप्यदार्ढ्ये तु धर्मभक्त्योरुदीरितः ।
हेतुर्येन हरिर्मह्यं स दत्ताद् दृढतां तयोः ॥ ७३ ॥

स्वभक्तस्येति । येन सदसद्देशाद्याः सदसद्बुद्ध्योर्हेतव इत्युक्तवता मत्पित्रा । स्वभक्तस्य । अपि । धर्मभक्त्योः । अदार्ढ्ये दृढताहीनत्वे । हेतुरुदीरितः पापिजनप्रसंगादि-कारणं प्रोक्तम् । सत्संगः कार्यः कुसंगश्च न कार्य इत्यप्युक्तमिति तुशब्दो ज्ञापयति । सः । हरिः । श्रीहरिकृष्णभगवदाख्यमत्पिता । मह्यम् । तयोर्धर्मभक्त्योः । दृढताम् । दत्तात् ॥७३॥

श्रैष्ठ्यं स्वज्ञानिभक्तस्य दौष्ट्यं मानस्य तज्जये ।
साधनं स्वस्य निर्मानिभक्तस्य बलिताऽधिका ॥ ७४ ॥

श्रैष्ठ्यमिति । स्वस्य यो ज्ञानिभक्तस्य । श्रैष्ठ्यं श्रेष्ठत्वम् । मानस्य ज्ञानभक्त्या-देरप्यभिमानस्य । दौष्ट्यं दुष्टत्वम् । तस्य मानस्य जये पराजये । साधनम् । स्वस्य । निर्मानि-भक्तस्य । अधिका बलिताऽधिकबलवत्त्वम् ॥ ७४ ॥

स्वमाहात्म्ययुतोपास्तिरात्मनिष्ठादिकारणम् ।
एतान्युक्तानि येन श्रीहरिर्मेऽस्त्विष्टदो हि सः ॥७५॥

स्वेति । स्वस्य माहात्म्ययुता । उपास्तिरुपासना । आत्मनिष्ठादिकारणं तथाविध-स्वोपासनयाऽऽत्मनिष्ठादार्ढ्यं दैहिकदुःखाभावश्च । एतानि स्वज्ञानिभक्तश्रैष्ठ्यादीनि । येन उक्तानि । सः । श्रीहरिः मे मह्यम् । इष्टदोऽभीष्टप्रदः । अस्तु ॥ ७५ ॥

स्वस्वरूपस्वमाहात्म्यवेदनं मोक्षकारणम् ।
स्वस्मिन् स्नेहस्य द्वैविध्यं तल्लक्ष्माणि च तत्त्वतः ॥ ७६ ॥

स्वेति । तत्त्वतो यथार्थतया । मोक्षस्य कारणं हेतुभूतम् । स्वस्वरूपं च स्वमाहात्म्यं च तयोर्यद्वेदनं ज्ञानं तत् । स्वस्मिन् । स्नेहस्य । द्वैविध्यं द्विविधत्वम् । तस्य स्वस्मिन्स्नेह-द्वैविध्यस्य लक्ष्माणि च ॥ ७६ ॥

स्वभक्तानां दुःस्वभावत्यजनं तस्य साधनम् ।
यः प्राहैतानि स हरिर्वासं मद्धृदये क्रियात् ॥ ७७ ॥

स्वभक्तानामिति । स्वभक्तानाम् । दुःस्वभावस्य त्यजनं त्यागविधानम् । तस्य दुःस्व-भावत्यजनस्य । साधनं च । एतानि स्वस्वरूपज्ञानादीनि । यः । प्राह सः । हरिः । मद्धृदये । वासम् । क्रियात् ॥ ७७ ॥

हेतुत्रयं गुणोद्रेके स्वेषां तन्नाशसाधनम् ।
सतां च महतां स्वस्य प्रसन्नत्वस्य साधनम् ॥ ७८ ॥

हेतुत्रयमिति । स्वेषां स्वभक्तानाम् । गुणोद्रेके रजस्तमोगुणकार्यरागाद्युज्जृंभणे । हेतुत्रयं देहात्मबुद्धिकुसंगप्राक्कर्मसंस्कारेति कारणत्रयम् । तस्य हेतुत्रयस्य नाशे नाशकरणे साधनमात्मानात्मविचारसत्संगमहत्तत्संगेत्युपायः । स्वस्य । महताम् । सतां सज्जनानाम् । प्रसन्नत्वस्य । साधनं तेषु निश्छद्मत्वं तदनुवृत्तिस्तद्दास्यं कामादिदोषत्यजनं चेत्याद्युपाय-वृंदं च ॥ ७८ ॥

स्वेषां स्वभक्तिवृद्धौ च दोषनाशे च साधनम् ।
य एतान्याह स हरिर्मन्मतौ वसतात् सदा ॥ ७९ ॥

स्वेषामिति । स्वेषां स्वभक्तानाम् । दोषनाशे । स्वस्य या भक्तिस्तस्या वृद्धौ च । साधनं महाभागवतसन्निषेवणतद्गुणग्रहणात्मकोपायश्च । एतानि । स्वभक्तगुणोद्रेकहेत्वा-दीनि । यः । आह । सः । हरिः । मन्मतौ मम बुद्धौ । सदा । वसतात् ॥ ७९ ॥

स्वस्मिन् प्रेम्णः स्वभक्तानां यः स्वमाहात्म्यवेदनम् ।
कारणं प्राह स हरिर्दत्तात्तद्वेदनं तु मे ॥ ८० ॥

स्वस्मिन्निति । यः । स्वभक्तानाम् । स्वस्मिन् । प्रेम्णोऽसाधारणस्नेहस्य । कारणम् । स्वमाहात्म्यस्य यद्वेदनं ज्ञानं तत् । प्राह । आत्मप्राप्ते साक्षान्न्राकृतौ स्वस्मिन्भगवत्त्व-विश्वासः प्रेम्णो हेतुरित्युक्त्वा स्वमाहात्म्यज्ञानमन्यं हेतुमाहेति तुशब्दो ज्ञापयति । सः । हरिः । मे मह्यम् । तद्वेदनं प्रत्यक्षस्य स्वस्य विश्वासं माहात्म्यज्ञानं चेत्यर्थः । दत्तात् ॥८०॥

स्वभक्तानां मायिकार्थवासनानां तु संक्षये ।
विवेकं यस्तथोपायान्मुख्यांस्तासां विनाशने ॥ ८१ ॥

स्वेति । यो निर्वासनिकभक्तप्रेष्ठतया प्रसिद्धः । स्वभक्तानाम् । मायिका येऽर्थाः पंचविषयास्तेषां या वासना भोगासक्तयस्तासाम् । सम्यक्क्षये नाशकरणे तु । विवेकम् । तथा । तासां वासनानाम् । विनाशने विनाशकरणे । मुख्यान् । उपायान्साधनानि ॥ ८१ ॥

श्रीहरिः कृपया प्राह स्वभक्तेभ्यः स मां निजम् ।
सम्यग्निर्वासनं कुर्याद् भक्तिधर्मसुतः प्रभुः ॥ ८२ ॥

श्रीति । स्वभक्तेभ्यः । कृपया । प्राह । प्रभुरवतारादिसर्वहेतुत्वान्महासमर्थः । भक्तिधर्मसुतः । सः । श्रीहरिः । निजं स्वपुत्रम् । माम् । सम्यक् सर्वथा । निर्गता वासना मायिकविषयासक्तिर्यस्य तथाविधम् । कुर्यात् ॥ ८२ ॥

धैर्यलोपः स्वभक्तस्य नो यस्य तस्य लक्षणम् ।
सिद्धयश्चोपतिष्ठंति स्वभक्तं यादृशं तथा ॥ ८३ ॥

धैर्येति । यस्य । स्वभक्तस्य । धैर्यलोपः । नो न स्यात् । तस्य । लक्षणम् । तथा । यादृशम् । स्वभक्तम् । सिद्धयः । उपतिष्ठंति प्राप्नुवंति ॥ ८३ ॥

लक्षणं तस्य कथितं येन श्रीहरिणा स माम् ।
कुर्यादेकांतिकं भक्तं स्वकीयं भक्तिधर्मजः ॥ ८४ ॥

लक्षणमिति । तस्य स्वभक्तस्य । लक्षणं च । येन । श्रीहरिणा । कथितम् । भक्तिधर्मजः । स श्रीहरिः । स्वकीयम् । भक्तम् । माम् । एकांतिकमेकांतिकस्वभक्तम् । कुर्यात् ॥ ८४ ॥

येषु स्वकीयभक्तेषु स्वगुणानां भवेद्ध्रुवम् ।
आविर्भावो भवेद्येषु सत्यादीनां क्वचिन्न च ॥ ८५ ॥

येष्विति । येषु । स्वकीयभक्तेषु । सत्यादीनाम् । स्वगुणानाम् । ध्रुवं निश्चितं यथा तथा । आविर्भावः । भवेत् । येषु । भक्तेषु च । क्वचित्कदाचित् । न भवेत् ॥ ८५ ॥

उभयेषां लक्षणानि तेषां येन यथार्थतः ।
उक्तानि श्रीहरिः सोऽस्तु नित्यं मन्मानसे प्रभुः ॥ ८६ ॥

उभयेषामिति । उभयेषां द्विप्रकाराणाम् । तेषां स्वभक्तानाम् । लक्षणानि । येन । यथार्थतो यथार्थतया । उक्तानि । प्रभुः । सः । श्रीहरिः । नित्यं निरंतरम् । मन्मानसे । अस्तु वसतु । मयि साक्षात्तन्निवासेन तदीयगुणास्तिष्ठंत्वित्यभिप्रायः ॥ ८६ ॥

स्वभक्तानां तु पुरतः स्वस्य तात्त्विकनिश्चयम् ।
सर्वोत्तमं कथितवान् यो मह्यं तं ददातु सः ॥ ८७ ॥

स्वेति । यो न्यूननिश्चयिदृढनिश्चयिनोः स्वभक्तयोर्हृदि जातसंकल्पान्प्राग्वदन् श्रीहरिः स्वभक्तानाम् । पुरतोऽग्रे स्वस्य । सर्वोत्तमम् । तात्त्विकनिश्चयं समाहात्म्यज्ञानयथार्थनिर्णयम् । कथितवान् । स श्रीहरिः । तं तथाविधं स्वनिश्चयम् । मह्यम् । ददातु ॥ ८७ ॥

समूहेषु चिदचितां योंऽतर्यामितयान्वितः ।
व्यतिरिक्तो ब्रह्मपुरे स्वपदे पुरुषोत्तमः ॥ ८८ ॥

सदादिव्यनराकारो मुक्तवृंदैरुपासितः ।
तस्मिन्नेकांतिकी भक्तिर्हरौ भक्तिसुतेऽस्तु मे ॥ ८९ ॥

समूहेष्विति । सदिति । यः मुक्तवृंदैः । उपासितः । सदा दिव्यनराकारः । पुरुषोत्तमः श्रीस्वामिनारायणः । चिदचितां क्षेत्रज्ञक्षेत्राणाम् । समूहेषु । अंतर्यामितया । अन्वितोऽन्वयतया स्थितः । स्वपदे स्वाखंडतया निवासभूते । ब्रह्मपुरे । व्यतिरिक्तश्चास्ति । आत्माक्षराणां शरीरत्वं तेषां स्वशरीरित्वं च यदस्ति तद्विविच्यैतद्य उवाचेत्यर्थः । भक्तिसुते । तस्मिन् । हरौ । मे । एकांतिकी । भक्तिः । अस्तु । इति ॥ ८८–८९ ॥

सुषुम्णा प्राप्यधामेशः समाध्याधारमूर्त्तिकः ।
शक्तित्रयप्रेरकश्च श्रीहरिर्मेऽस्तु हृत्कजे ॥ ९० ॥

सुषुम्णेति । सुषुम्णया नाड्या प्राप्यं यद्धाम ब्रह्मधाम तस्येशः स्वामी । समाधिश्चित्तै-काग्र्यं तस्याधारभूता मूर्त्तिर्यस्य सः । शक्तीनां ज्ञानक्रियेच्छाख्यानां यत् त्रयं तस्य प्रेरकश्च । देहांतर्बहिःसुषुम्णास्थितिमवस्थात्रयलयक्रमं ज्ञानक्रियेच्छाशक्तीनां स्वस्मिन्वर्त्तनं च य उवाच स इत्यर्थः । श्रीहरिः । मे । हृत्कजे हृदयारविंदे । अस्तु ॥ ९० ॥

निरूपितं निर्गुणादिशब्दार्थैः स्वस्य येन तु ।
सदा दिव्याकारवत्त्वं हरौ तत्रास्तु मन्मतिः ॥ ९१ ॥

निरूपितमिति । येन । निर्गुणादिशब्दानां येऽर्थास्तैः । स्वस्य । सदा दिव्याकार-वत्त्वम् । निरूपितम् । तत्र तस्मिन् । हरौ । मन्मतिः । अस्तु ॥ ९१ ॥

स्वस्यैकांतिकसाधोस्तु गुणागमनकारणम् ।
तत्सेविनि तथा तस्य गुणानागमकारणम् ॥ ९२ ॥

स्वस्येति । स्वस्य । एकांतिकसाधोः । तस्य साधोः सेविनि सेवासमागमवचनावधारण-गुणग्रहणकर्त्तरि पुरुषे । गुणानां यदागमनस्य कारणं तत् । तथा । तस्य स्वैकांतिकसाधोः । गुणानां यदनागमकारणं तच्च ॥ ९२ ॥

निजेभ्यः कृपया प्राह यो भक्तिधर्मजः प्रभुः ।
स श्रीहरिर्विदध्यान्मां भक्तमेकांतिकं निजम् ॥ ९३ ॥

निजेभ्य इति । भक्तिधर्मजः । प्रभुः परब्रह्म । यः । निजेभ्यः । कृपया । प्राह । सः । श्रीहरिः । माम् । निजम् । एकांतिकम् । भक्तं विदध्यात्करोतु ॥ ९३ ॥

स्ववद्भावश्च मर्यादा स्वार्चासु स्वस्य साधुषु ।
रक्ष्येति प्राह यो दद्यात्स हरिस्तेषु ते च मे ॥ ९४ ॥

स्ववदिति । यः सर्वावतारहेतुसर्वांतर्यामितया प्रसिद्धः । स्वस्य या अर्चाः । प्रतिमाः तासु । स्वस्य । साधुषु च । स्ववत्स्वस्मिन्निव । भावो भक्तिः । मर्यादा च । रक्ष्या । इति । प्राह स्वभक्तान्प्रत्याह । सः । हरिः । मे मह्यम् । तेषु स्वार्चासाधुषु । ते स्ववद्भावमर्यादे । दद्यात् ॥ ९४ ॥

यो हिंसारहितं धर्मं स्वस्यातिप्रियमाह च ।
क्रोधादिहीनदौर्लभ्यं हरिः सोऽस्तु ममांतरे ॥ ९५ ॥

य इति । योऽत्रावतीर्य महदतिश्रेष्ठाहिंसाधर्मप्रवर्त्तयिता स्वयम् । स्वस्य । अतिप्रियम् । हिंसारहितम् । धर्मम् । क्रोधादयो ये दोषास्तैर्हीनानां रहितानां दौर्लभ्यं दुर्लभत्वं च । आह स्वकीयान्प्रत्यवदत् । सः । हरिः । मम । अंतरेंऽतःकरणे । अस्तु ॥ ९५ ॥

स्वकीयानुभवाढ्यानि कृत्वा प्रश्नोत्तराणि यः ।
नृपं काकुभयं जीववर्माणं भक्तमात्मनः ॥ ९६ ॥

स्वकीयेति । यः । स्वकीयानुभवैराढ्यानि युक्तानि । प्रश्नानामुत्तराण्यंतःस्थसाधुबलवृद्ध्यै वहिः सत्संगः कार्योऽन्तःस्थासाधुबलवृद्धिकरकुसंगश्च न कार्यः स्वजीवश्रेयोऽर्थमेव भगवतो ममाश्रयः कार्यः सत्संगिनां शूलदुःखं कंटकेन विनश्यतीत्यादीनि प्रत्युत्तराणि । कृत्वा । आत्मनः स्वस्य । भक्तम् । काकुभयम् । नृपम् । जीववर्माणं नृपं च ॥ ९६ ॥

सतः स्वभक्तान् गृहिणस्तथान्यान् सदसि स्थितान् ।
हर्षयामास स स्वामी श्रीहरिर्हर्षदोऽस्तु मे ॥ ९७ ॥

सत इति । तथा । सदसि सभायाम् । स्थितान् । अन्यान् । सतः साधून् । गृहिणश्च । हर्षयामास । स्वामी । सः । श्रीहरिः । मे मह्यम् । हर्षदः स्वानंदप्रदः । अस्तु ॥ ९७ ॥

स्वभक्तद्रोहरूपं तु स्वाक्षम्यमपराधकम् ।
सदैव दिव्याकारत्वं स्वस्य ब्रह्मपुरेशितुः ॥ ९८ ॥

स्वेति । स्वभक्तानां द्रोहरूपं तु स्वेन क्षंतुं सोढुमशक्यस्तम् । अपराधकमपराधम् । ब्रह्मपुरेशितुः । स्वस्य । सदैव । दिव्याकारत्वं च ॥ ९८ ॥

स्वस्यैकत्वं नराकारदिव्याकारत्वयोस्तथा ।
यो हरिः प्राह कृपया स क्रियान्मां स्ववल्लभम् ॥ ९९ ॥

स्वस्येति । तथा । स्वस्य । नराकारश्च तयोर्भावौ तत्त्वे तयोः एकत्वम् । यः । कृपया प्राह स्वाश्रितानाह । स श्रीहरिः । माम् । स्ववल्लभम् । क्रियात् ॥ ९९ ॥

कृता स्वेन नृपाग्रे यो वार्त्तां प्राह सतां पुरः ।
स्वस्य सर्वाः क्रियाश्चाह निःश्रेयसकरीर्नृणाम् ॥ १०० ॥

कृतामिति । यः । नृपस्योत्तमभूपस्याग्रे । स्वेन । कृताम् । वार्त्ताम् । सतां सभोपविष्टसजनानां पुरः । प्राह । स्वस्य सदा दिव्यस्वरूपेण सतो जनैर्नराकारेण वीक्ष्यमाणस्यात्मनः । सर्वाः । क्रियाः । नृणां श्रोतृवक्तृसत्तृजनानाम् । निःश्रेयसकरीः कल्याणकर्त्र्य इति च । आह ॥ १०० ॥

माहात्म्यज्ञानयुक्तः स्यान्निश्चयः स्वस्य सः ।
तथाविधो न यस्य स्यात्तयोर्लक्ष्माणि चाह यः ॥ १०१ ॥

माहात्म्येति । यश्च । यस्य । भक्तस्य । माहात्म्यज्ञानयुक्तः । स्वस्य । निश्चयः । स्यात् । यस्य तथाविधः । स निश्चयः । न स्यात् । तयोर्भक्तयोः । लक्ष्माणि च । आह ॥ १०१ ॥

स्वस्योत्तमादिभक्तानां लक्षणान्याह यः स्फुटम् ।
स श्रीहरिर्विदध्यान्मां भक्तमेकांतिकं निजम् ॥ १०२ ॥

स्वस्येति । यश्च । स्वस्य । उत्तमादय उत्तममध्यमकनिष्ठा ये भक्तास्तेषाम् । लक्षणानि । स्फुटं यथा तथा । आह । सः । श्रीहरिः । माम् । निजम् । एकांतिकम् । भक्तम् । विदध्यात्करोतु ॥१०२॥

उक्त्वा निष्कामता या यो दुःसाध्यं साधनं ततः ।
तस्याः सिध्यै स्वकीयोपासनाप्रभृतिसाधनम् ॥ १०३ ॥

उक्त्वेति । यः स्वसंपूर्णकृपेतरोपायैर्दुःसाध्याविच्छिन्ननिष्कामव्रतस्य स्वाज्ञापालकागणितस्त्रीपुरुषेषु सहजतया प्रवर्त्तकत्वेन प्रसिद्धः श्रीसहजानंदस्वामी । निष्कामताया असिधाराव्रताख्यब्रह्मचर्यत्वस्य । दुःखेन साधितुमशक्यं दुःसाध्यम् । साधनम् । उक्त्वा स्वभक्तान्प्रति प्रोच्य । ततः तस्या निष्कामतायाः । सिद्ध्यै स्वकीयोपासनाप्रभृतिस्वोपासनादिकम् । साधनम् ॥ १०३ ॥

ऊचे मनोऽर्पितं येन स्वस्मिन् येन च नार्पितम् ।
लक्षणानि तयोः स्वामी तस्मिन्मेऽस्त्वर्पितं मनः ॥ १०४ ॥

ऊच इति । ऊचे । स्वस्मिन् । येन भक्तेन । मनः । अर्पितम् । येन च । नार्पितम् । तयोर्भक्तयोः लक्षणानि । यश्च । स्वामी । ऊचे । तस्मिन् श्रीसहजानंदस्वामिनि । मे । मनः । अर्पितम् । अस्तु । मनोऽर्पकलक्षणानि यान्यत्रोक्तानि तानि मह्यं स ददात्वित्यर्थः ॥ १०४ ॥

स्वस्य भक्तैर्यथा वृत्यं स्वकीयेच्छानुसारतः ।
तथा यः प्राह स हरिर्ममास्तु शरणं सदा ॥ १०५ ॥

स्वस्येति । यः स्वेच्छास्वातंत्र्यं द्योतयन्महाप्रभुः । स्वस्य । भक्तैः । यथा । स्वकीयेच्छानुसारतः । वृत्यम् । तथा । प्राह तानुवाच । सत्संगिनां वृद्धिस्तु स्वेच्छयाऽस्त इति भावः । सः । हरिः । सदा । मम । शरणम् । अस्तु ॥ १०५ ॥

स्वभक्तान्वयजा जीवा यांत्युद्धारं यथा भवात् ।
नोद्धारं च यथा तस्य प्रकारं प्राह यः स्फुटम् ॥ १०६ ॥

स्वभक्तेति । यः । स्वभक्तस्यान्वयजा वंशोत्पन्नाः । जीवाः । यथा । भवात्संसारात् । उद्धारं मोक्षम् । यांति प्राप्नुवंति । यथा च । उद्धारम् । न यांति । तस्य प्रकारम् । स्फुटं यथा तथा । प्राह ॥ १०६ ॥

परिपूर्णं निश्चयं च स्वस्याल्पं प्राह यस्तु तम् ।
श्रीहरिर्मे स दद्याद्वै परिपूर्णं स्वनिश्चयम् ॥ १०७ ॥

परिपूर्णमिति । यस्तु यश्च । स्वस्य । परिपूर्णम् । निश्चयम् । अल्पं च । तं निश्चयम् । प्राह । सः । श्रीहरिः । मे मह्यम् । परिपूर्णं वै सर्वांगैः संपूर्णमेव । स्वनिश्चयम् । दद्यात् ॥ १०७ ॥

स्वप्रियस्य स्वभक्तस्य तस्य स्वस्याप्रियस्य च ।
लक्ष्म यः प्राह स हरिर्मां क्रियात्स्वप्रियं सदा ॥ १०८ ॥

स्वप्रियस्येति । यः । स्वप्रियस्य । स्वभक्तस्य । स्वस्य । अप्रियस्य । तस्य भक्तस्य च लक्ष्म लक्षणम् । प्राहः । सः । हरिः । माम् । सदा । स्वप्रियम् । क्रियात् ॥ १०८ ॥

स्वभक्तानां स्वस्वधर्माचरणं तु सहेतुकम् ।
ऊचे यश्च स्वभक्तानां देहांतसमये मृतिः ॥ १०९ ॥

स्वभक्तानामिति । यः । स्वभक्तानाम् । सहेतुकम् । स्वस्वधर्माचरणम् । ऊचे । स्वभक्तानां च । देहांतसमये । मृतिर्मृत्युः ॥ १०९ ॥

यथा संशोभते नैव शोभते सा यथाऽत्र तु ।
तद्धेतुं प्राह स हरिर्मद्रक्षां सर्वतः क्रियात् ॥ ११० ॥

यथेति । अत्र लोके तु । यथा । संशोभते । यथा च । सा मृतिः । नैव । शोभते । तयोर्यो हेतुस्तम् । प्राह । सः । हरिः । सर्वतः कालकर्मादिभ्यः । मद्रक्षाम् । क्रियात् ॥ ११० ॥

स्वभक्तानां शिवानंदमुख्यानां त्यागिनां सताम् ।
एकविंशतिसंख्यानां कृत्वा प्रश्नोत्तराणि यः ॥ १११ ॥

स्वेति । यः । स्वभक्तानाम् । शिवानंद एतन्नामा साधुर्मुख्यो येषां तेषाम् । एकविंशतिसंख्यानाम् । त्यागिनां परमहंसाश्रमस्थानाम् । सतां साधूनाम् । प्रश्नोत्तराणि तेषां सतां ये प्रश्नास्तेषामुत्तराणीत्यर्थः । कृत्वा ॥ १११ ॥

हर्षयामास तान् स्वामी भक्तिधर्मसुतो हरिः ।
स्वसेवाहर्षदः सोऽस्तु मह्यं ब्रह्मपुरेशिता ॥ ११२ ॥

हर्षयामासेति । तान्साधून् । हर्षयामास । ब्रह्मपुरधाम्न ईशिता स्थपतिः । अत एव । स्वामी अक्षरकालमायाबद्धमुक्तक्षेत्रक्षेत्रज्ञाधिपतिः । धर्मसुतः श्रीहरिप्रसादनंदनः । सः । हरिः श्रीस्वामिनारायणनामा श्रीहरिः । मह्यम् । स्वस्य या सेवा यो हर्षः स्वानंदश्च तौ ददातीति तथोक्तः । अस्तु ॥ ११२ ॥

यो दिव्याक्षरधाम्नि राजति सदा संसेवितो भावतो
दिव्यैर्वस्तुभिरक्षरात्मभिरनंतैर्मुक्तवृंदैर्मुदा ।
दिव्यैश्वर्यगुणादिभिः परतरः सर्वेभ्य ईशेश्वर-
स्तस्मिन्मे मतिरस्तु भक्तितनये भक्त्यात्मिका श्रीहरौ ॥ ११३ ॥

इतिश्रीप्रथमप्रकरणं समाप्तम् ।

य इति । सर्वेभ्यः परतरः स्वरूपस्वभावादिभिः श्रेष्ठः । ईशानां प्रकृतिपुरुषादीश्वराणामीश्वरः स्वामी । यः । अक्षरात्मभिर्ब्रह्मभावापन्नैः । अनंतैः । मुक्तवृंदैः । दिव्यानि दिव्यमूर्त्तिमंति यान्यैश्वर्याणि गुणादयः क्षमादयाऽऽनंदादयश्च तैः । वस्तुभिः छत्रचामरादिभिः । भावतो भक्तिपूर्वम् । मुदा । संसेवितः सन् । दिव्याक्षरधाम्नि । सदा । राजति विराजते । भक्तितनये श्रीप्रेमवतीनंदने । तस्मिन् । श्रीहरौ । मे मम । भक्त्यात्मिका गाढस्नेहरूपा । मतिः । अस्तु ॥ ११३ ॥

इति श्रीहरिवाक्यसुधासिन्धौ प्रथमप्रकरणोक्ततरंगाः समाप्ताः ॥

अथ सारंगनगरोक्ततरंगाः प्रारभ्यन्ते

विषयेभ्यः स्वभक्तानां निवृत्तेः साधनं परम् ।
आत्मज्ञानं स्वमाहात्म्यवेदनं कृपया प्रभुः ॥ ११४ ॥
य उवाच स्फुटं स्वामी भक्तिधर्मात्मजो हरिः ।
मह्यं स देयात्त्वरितं महत्तत्साधनद्वयम् ॥ ११५ ॥

विषयेभ्य इति । य इति । प्रभुर्महासमर्थः । यः । स्वामी स्वभक्तानाम् । विषयेभ्यो मायिकशब्दादिभ्यः सकाशात् । निवृत्तेरुपरामस्य । परं श्रेष्ठम् । साधनं साधनभूतम् । आत्मज्ञानम् । स्वमाहात्म्यवेदनं परमात्मनः स्वस्य माहात्म्यज्ञानं च । कृपया । स्फुटं यथा तथा । उवाच । भक्तिधर्मात्मजः । सः । हरिः । मह्यम् । महदतिश्रेष्ठम् । तत्सात्मज्ञानस्व-माहात्म्यज्ञानरूपम् । साधनद्वयम् । त्वरितमद्यैव । देयात् इति ॥ ११४—११५ ॥

स्नेहः स्वस्मिन्स्वभक्तानां स्वस्य तेषु यथा भवेत् ।
तथोक्ताः सद्गुणा येन तान् ददातु स मे हरिः ॥ ११६ ॥

स्नेह इति । येन स्वस्मिन्प्रधानान्यस्वभक्तेषु स्नेहाढ्यतया प्रसिद्धेन स्वस्मिन् । स्वभक्तानाम् । स्नेहः । तेषु स्वभक्तेषु । स्वस्य च स्नेहः । यथा । भवेत् । तथा । सद्गुणा मनोवाग्देहगुणैः स्वस्य स्वमहत्वतां चाग्रे वर्त्तनरूपश्रेष्ठगुणाः । उक्ताः । सः । हरिः । मे । मह्यम् । तान्सद्गुणान् । ददातु ॥ ११६ ॥

यः स्वभक्तस्तु पूजां स्वां बाह्यैः प्रेम्णाथवांतरैः ।
कुर्यात्तस्य विशिष्टत्वं लक्षणं तस्य यच्च तत् ॥ ११७ ॥

य इति । यः । स्वभक्तः । स्वां स्वकीयाम् । पूजाम् । प्रेम्णा स्नेहेन रोमांचितो भूत्वा । बाह्यैः प्रत्यक्षोपचारैः । अथवा । आंतरैर्मानसिकोपचारैः । कुर्यात् । तस्य स्वभक्तस्य । विशिष्टत्वं श्रेष्ठत्वम् । तस्य विशिष्टत्वस्य । यत् । लक्षणम् । तच्च ॥ ११७ ॥

स्वस्मिन्प्रेम्णश्च हेतूनां श्रुत्यादीनां यथार्थतः ।
लक्ष्माणि प्राह यः स्वामी तस्मिन्प्रेमास्तु मेऽचलः ॥ ११८ ॥

स्वस्मिन्निति । स्वस्मिन् । प्रेम्णः स्नेहस्य । हेतूनां कारणभूतानाम् । श्रुत्यादीनां श्रवणमननिदिध्याससाक्षात्काराणाम् । लक्ष्माणि च । यः । स्वामी । प्राह । तस्मिन् श्रीसहजानंदस्वामिनि । मे । अचलः । प्रेमा स्नेहः । अस्तु ॥ ११८ ॥

स्वभक्तानां स्वतोऽन्यत्र वासनानां निवृत्तये ।
आत्मनिष्ठां स्वमाहात्म्यज्ञानं च साधनं परम् ॥ ११९ ॥

स्वेति । स्वभक्तानाम् । स्वतः स्वस्मात् । अन्यत्र मायिकपदार्थेषु । वासनानाम् । निवृत्तये आत्मनिष्ठाम् । स्वमाहात्म्यज्ञानं च । परं श्रेष्ठम् । साधनद्वयम् ॥ ११९ ॥

यः प्राह कृपया स्वामी श्रीहरिर्भक्तवत्सलः ।
स मह्यं तां च तद्दद्याद्भक्तिधर्मसुतप्रभुः ॥ १२० ॥

य इति । भक्तवत्सलः । यः । स्वामी । कृपया । प्राह । भक्तिधर्मसुतः । प्रभुः । सः । श्रीहरिः । मह्यम् । तामात्मनिष्ठाम् । तत्स्वमाहात्म्यज्ञानं च । देयात् ॥ १२० ॥

स्वनामोच्चारणादीनां यथावत्फलमाह यः ।
श्रीहरिः समनस्कानां सोऽस्तु मन्मानसे सदा ॥ १२१ ॥

स्वेति । यः स्वनामकीर्त्तनादिभक्त्या जनोद्धारकः । समनस्कानाम् । स्वनामोच्चारणादीनामित्यर्थः । यथावत् । फलम् । आह । सः । श्रीहरिः । सदा । मन्मानसे । अस्तु ॥ १२१ ॥

एकैकस्यामवस्थायां द्वे द्वे ते स्तो यथा तथा ।
तल्लक्ष्माणि परादीनां गिरां तानि च तत्त्वतः ॥ १२२ ॥

एकेति । एकैकस्याम् । अवस्थायां जाग्रत्स्वप्नसुषुप्त्याख्यायाम् । द्वे द्वे । ते अवस्थे । यथा । स्तः स्थिते स्तः । तथा । तल्लक्ष्माणि । परादीनां परापश्यंतीमध्यमावैखरीणाम् । गिरां वाणीनाम् । तानि लक्ष्माणि च । तत्त्वतो यथार्थतया ॥ १२२ ॥

तज्ज्ञानसिद्ध्यै भक्तानां स्वेषां स्वामी जगाद यः ।
दद्यात्स श्रीहरिर्मह्यं ज्ञानं मोक्षार्थसाधनम् ॥ १२३ ॥

तदेति । यः । स्वामी । स्वेषां स्वकीयानाम् । भक्तानाम् । तासां जाग्रदाद्यवस्थानां परादिवाचां च यद् ज्ञानं तस्य सिद्ध्यै । जगाद तानाह । सः । श्रीहरिः । मह्यम् । मोक्षार्थस्य मोक्षाख्यपुरुषार्थस्य साधनं साधनभूतम् । ज्ञानम् । दद्यात् ॥ १२३ ॥

सत्संगमेव यः प्राह नैमिशं क्षेत्रमुत्तमम् ।
सद्धर्महेतुं स हरिर्वासं देयात्तु तत्र मे ॥ १२४ ॥

सत्संगमिति । यः साधुहृदये सदा साक्षात्स्थितोऽवतारी स्वयम् । सत्संगं महतां साधूनां समागममेव । सद्धर्मस्य हेतुं हेतुभूतम् । उत्तमम् । नैमिशं क्षेत्रं नैमिशारण्यम् । प्राह । सः । हरिः । मे मह्यम् । तत्र सत्संगात्मकनैमिशक्षेत्रे । वासं सदा निवासम् । देयात् ॥ १२४ ॥

स्वस्याप्रसन्नताहेतोः स्वभक्तेषु तु लक्षणम् ।
ईर्ष्याया यो हरिः प्राह स मां कुर्यात्तयोज्झितम् ॥ १२५ ॥

स्वस्येति । यः । स्वभक्तेषु । स्वस्य । अप्रसन्नताया हेतोर्हेतुभूतायाः । ईर्ष्यायाः । लक्षणम् । प्राह । सः । हरिः । माम् । तयेर्ष्यया । उज्झितं रहितम् । कुर्यात् ॥ १२५ ॥

युगप्रवृत्त्यादिपंचप्रश्नप्रतिवचांसि यः ।
शिक्षयन्स्वाश्रितानाह हरिः कुर्यात्प्रियं स माम् ॥ १२६ ॥

युगेति । यः । स्वाश्रितान् । शिक्षयन्सन् । युगप्रवृत्त्यादयो ये पंच प्रश्ना युगप्रवृत्तिहेतुगुणप्रवृत्तिहेतुगुणानुसारिभक्तिविशेषभक्तस्थकलिनिवृत्त्युपायस्थानार्थेतिपंचानुयोगास्तेषां प्रतिवचांस्युत्तराणि । आह । सः । हरिः । माम् । प्रियं स्ववल्लभम् । कुर्यात् ॥ १२६ ॥

लक्षणान्याह यः स्वामी धर्मिणां चाप्यधर्मिणाम् ।
अंतर्बहिर्दृष्टिमतां स्वधामांतिकदूरताम् ॥ १२७ ॥

लक्षणानीति। यः परमकृपालुतया प्रसिद्धः। स्वामी। धर्मिणां धर्मनिष्ठानाम्। अधर्मिणां चापि जनानाम्। लक्षणानि। आह। अंतर्बहिर्दृष्टिमतां स्वधामांतिकदूरतामंतर्दृष्टिमतां स्वभक्तानां स्वधाम्नां समीपवर्त्तित्वं बहिर्दृष्टिमतां स्वभक्तानां स्वधाम्नां दूरवर्त्तित्वं च। स्वानामंतर्दृष्ट्या तेषां समीपवर्त्तित्वं परेषां बहिर्दृष्ट्या तेषां दूरवर्त्तित्वं चेत्यर्थः ॥ १२७ ॥

यश्चाहापारकृपया स्वभक्तेषु यथार्थतः।
स हरिर्भक्तितनयः सर्वदाऽस्तु ममात्मनि ॥ १२८ ॥

य इति। यश्च। स्वभक्तेषु। अपारकृपया। यथार्थतः। आह। भक्तितनयः। सः। हरिः। सर्वदा। मम। आत्मनि। अस्तु साक्षान्निवासं करोतु ॥ १२८ ॥

स्वभक्तैः पौरुषेणैव प्राप्यानाह गुणांश्च यः।
कृपया स्वस्य तान् स्वामीतद्गुणाढ्यं क्रियात्समाम् ॥ १२९ ॥

स्वभक्तैरिति। यः। स्वभक्तैः। पौरुषेण पुरुषप्रयत्नेन। एव। प्राप्यान्प्राप्तुं योग्यान्। स्वस्य। गुणान् वैराग्यश्रद्धाऽऽत्मनिष्ठास्वधर्मप्रियत्वाहिंसाशुचित्वाष्टांगब्रह्मचर्यस्व-माहात्म्यज्ञानेत्यष्टगुणान्। कृपया। तान्स्वभक्तान्प्रति। आह। सः। स्वामी। माम्। तैर्वै-राग्याद्यैर्गुणैराढ्यम्। क्रियात् ॥ १२९ ॥

आत्मरूपविचारं यो भक्तैः स्वैः कार्यमादरात्।
स्पष्टं प्राह हरिः सोऽस्तु ध्येयो ब्रह्मात्मना मया ॥ १३० ॥

आत्मेति। यः। स्वैः स्वकीयैः। भक्तैः। आदरात्। कार्यम्। आत्मरूपो यो विचारस्तम्। स्पष्टं यथा तथा। प्राह। सः। हरिः। मया। ब्रह्मात्मना ब्रह्मस्वरूपेण। ध्येयः। अस्तु ॥ १३० ॥

स्वभक्तानां स्वस्वरूपनिश्चयस्य जगाद यः।
सच्छास्त्रमूलकं दार्ढ्यं श्रीहरिः सोऽस्तु मन्मतौ ॥ १३१ ॥

स्वभक्तानामिति। यः। स्वभक्तानाम्। स्वस्वरूपस्य यो निश्चयस्तस्य। सच्छास्त्राण्येव मूलं यस्य तत्। दार्ढ्यं दृढत्वम्। जगाद। सः। श्रीहरिः। मन्मतौ। अस्तु स्वोक्तस्वनिश्चयं मे सोऽर्पयत्वित्यर्थः ॥ १३१ ॥

स्वधाम्नोऽपतनं स्वानां भक्तानामाह यस्तथा।
प्रमादमोहौ भक्तैः स्वैस्त्यक्तव्यावाह सर्वथा ॥ १३२ ॥

स्वधाम्न इति। यः। स्वानां स्वकीयानाम्। भक्तानाम्। स्वधाम्नः सकाशात् अपतन-मभ्रंश्यत्वम्। आह। तथा। स्वैः। भक्तैः। सर्वथा। त्यक्तव्यौ। प्रमादोऽसावधानता च मोहो विपरीतज्ञानं च तौ। आह ॥ १३२ ॥

प्रसंख्यानं च तत्त्वानां देहयोः स्थूलसूक्ष्मयोः।
स्थूलसूक्ष्मदेहकृतकर्मणां च समानताम् ॥ १३३ ॥

प्रसंख्यानमिति। स्थूलसूक्ष्मयोः। देहयोः। तत्त्वानाम्। प्रसंख्यानं गुणानां च। स्थूलसूक्ष्मदेहाभ्यां कृतानि यानि कर्माणि तेषाम्। समानतां तुल्यत्वं च ॥ १३३ ॥

स्वभक्ताभक्तयोः कर्माभावभावौ च तत्त्वतः ।
य आह श्रीहरिः कुर्यात्स मामेकांतिकं निजम् ॥ १३४ ॥

स्वेति । स्वस्य भक्तश्च अभक्तश्च तयोः । कर्मणामभावोऽसत्यत्वं च भावः सत्यत्वं च तौ । यश्च । तत्त्वतो यथार्थतया । आह । सः । श्रीहरिः । माम् । निजम् । एकांतिकं भक्तम् । कुर्यात् ॥ १३४ ॥

आत्मनिष्ठादिरहितात्केवलप्रेमिणः स्वकात् ।
आत्मनिष्ठादियुक्तस्य श्रेष्ठतां स्वाश्रितस्य यः ॥ १३५ ॥

आत्मनिष्ठेति । यो मुग्धामध्याप्रौढानां भावैर्भजनीयः स्वामी । आत्मनिष्ठादिरहितात् । केवलप्रेमिण आत्मनिष्ठावैराग्यरहितैकप्रेमयुक्तात् । स्वकात्स्वभक्तात् । आत्मनिष्ठादियुक्तस्य । स्वाश्रितस्य । श्रेष्ठताम् ॥ १३५ ॥

श्रीहरिः प्राह कृपया हेतुदर्शनतोऽञ्जसा ।
आत्मनिष्ठादिगुणकं भक्तं मां विदधातु सः ॥ १३६ ॥

श्रीति । अंजसा तत्त्वतः । हेतुदर्शनतो हेतूनां दर्शनेन । कृपया प्राह । सः । श्रीहरिः । माम् । आत्मनिष्ठादयो गुणा यस्मिंस्तथाभूतम् । भक्तं स्वस्मिन्प्रेमाढ्यदासम् । विदधातु १३६॥

नरनारायणाख्यस्य स्वावतारस्य यत्तपः ।
मोक्षायैव स्वभक्तानां न सर्वेषां नृणामिति ॥ १३७ ॥
प्रमाणयुक्तत्प्राह श्रीहरिः पुरुषोत्तमः ।
यः स मे भवताद्धर्मज्ञानादिगुणवृद्धिकृत् ॥ १३८ ॥

नरेति । प्रमाणेति । योऽवतारितया प्रसिद्धः । पुरुषोत्तमः । नरनारायणाख्यस्य । स्वावतारस्य । यत् । तपः । तत् । स्वभक्तानामेव । मोक्षाय मोक्षाप्तिसाधनरूपधर्मज्ञानादि-गुणवृद्धिकरणायास्ति । सर्वेषाम् । नृणाम् । न मोक्षार्थं नास्ति । इति प्रमाणयुक्तं यथा तथा । प्राह । सः । श्रीहरिः । मे मम । धर्मज्ञानादिगुणवृद्धिकृत् । भवतात् ॥ १३७–१३८ ॥

ज्ञेयां स्वभक्तैः परतां महतां स्वस्य चांजसा ।
दृष्टांतैराह यः स्वामी स मे सेव्योऽस्तु सर्वदा ॥ १३९ ॥

ज्ञेयामिति । यः सर्वोपरितया प्रसिद्धः । स्वभक्तैः । ज्ञेयां ज्ञातुं योग्याम् । स्वस्य श्रीपुरुषोत्तमस्यात्मनः । परतां सर्वेभ्यः श्रेष्ठताम् । महत्तां निरवधिकातिशयमहिमवत्त्वं च । दृष्टांतैरुदाहरणैः । अंजसा यथार्थतया । आह । सः । स्वामी । मे । सर्वदा । सेव्यः । अस्तु ॥ १३९ ॥

शिक्षावाक्यामृतैः स्वीयैः स्वाश्रितानां सतां हरिः ।
विदधे हितपुष्टिं यः स्युस्तस्यैतानि मद्धृदि ॥ १४० ॥

शिक्षेति । यः सर्वथा साधुहितकरः । हरिः श्रीस्वामिनारायणः । स्वीयैः । शिक्षार्थं यानि वाक्यरूपामृतानि तैः । स्वाश्रितानाम् । सतां वर्णिपरमहंसादीनां सज्जनानाम् । हितस्य

दुःखवर्जितसुखस्य या पुष्टिः पोषणं ताम् । विदधे कृतवान् । तस्य श्रीहरेः । एतानि शिक्षा-वाक्यामृतानि । मद्धृदि । स्युः स्थिरीभवंतु ॥ १४० ॥

योऽक्षरात्परतरः परेश्वरो ब्रह्मस्वरूपमुनिभिः सुपूजितः ।
सर्वजीवदयया नराकृतिः श्रीहरिं तमहमानतोऽस्मि हि ॥ १४१ ॥

इति सारंगनगरोक्ततरंगाः समाप्ताः

य इति । यः । पुराणप्रकृतिपुरुषादीनामीश्वरः । अक्षरादक्षरब्रह्मणः सकाशात् । पर-तरः स्वरूपस्वभावगुणविभूत्यादिभिरतिश्रेष्ठः । ब्रह्मस्वरूपमुनिभिः । सुपूजितः प्रेम्णाऽर्चितः । सर्वजीवदयया बद्धमुक्तक्षेत्रज्ञोपरि परिपूर्णकृपया हेतुना । नराकृतिर्मनुष्याकारेण दृश्यमानोऽ-भवदित्यर्थः । तम् । श्रीहरिम् । अहम् । आनतोस्मि प्रणमामि । हि ॥ १४१ ॥

इति श्रीहरिवाक्यसुधासिन्धौ सारंगनगरोक्ततरंगाः समाप्ताः ॥

अथ कार्यायनोक्ततरंगाः प्रारभ्यन्ते ।

वेद्यं स्वभक्तैर्ज्ञानं यत्स्वस्य प्राहांजसा हरिः ।
यः स ब्रह्मपुरेशो मे देयात्तद्भक्तिधर्मजः ॥ १४२ ॥

वेद्यमिति । योऽवाङ्मनोऽगोचरोऽपि भक्तानां प्रत्यक्षतया वर्त्तमानः । स्वभक्तैः । वेद्यं ज्ञातव्यम् । यत् । स्वस्य स्वस्वरूपस्य । ज्ञानम् । तत् । अंजसा यथार्थतया । प्राह । भक्ति-धर्मजः । ब्रह्मपुरेशः । सः । हरिः । मे मह्यम् । तज्ज्ञानम् । देयात् ॥ १४२ ॥

स्वभक्तानां दोषमतिः शुद्धा स्यात्साधनैस्तु यैः ।
तान्याह यः स मे स्वामी निवासं कुरुतान्मतौ ॥ १४३ ॥

स्वेति । यः । स्वभक्तानाम् । दोषरूपा या मतिः सा तु । यैः । साधनैः । शुद्धा । स्यात् । तानि साधनानि । आह । सः । स्वामी । मे । मतौ । निवासम् । कुरुतात् ॥ १४३ ॥

साधुत्वसिद्धये स्वेषां सतां साधनमस्ति यत् ।
तदाह यो हरिः सोऽस्तु मह्यं तत्साधनप्रदः ॥ १४४ ॥

साधुत्वेति । यः । स्वेषाम् । सतां मुन्यादिसज्जनानाम् । साधुत्वस्य साधुतायाः सिद्धये । यत् । साधनम् । अस्ति । तत् । आह । सः । हरिः । मह्यम् । तत्साधनप्रदः । अस्तु ॥ १४४ ॥

जीवात्मसु स्वयं साक्षिरूपो यद्वद्य आस्थितः ।
तद्वत्प्राह हरिः सोऽस्तु सदा साक्षान्मदात्मनि ॥ १४५ ॥

जीवात्मस्विति । यः । स्वयम् । जीवात्मसु बद्धमुक्तक्षेत्रज्ञेषु । साक्षिरूपः सन् । यद्वद्यथा । यः । आस्थितः । तद्वत्तथा । प्राह । सः । हरिः । मदात्मनि । साक्षात् । सदा । अस्तु तिष्ठतु ॥ १४५ ॥

येन मुख्यः स्वावतारहेतुः सद्भ्य उदीरितः ।
स भक्तितनये मेऽस्तु स्वेक्षणादिसुखप्रदः ॥ १४६ ॥

येनेति । येन स्वैकांतिकभक्तानानंदयितुमेव मुहुरत्र स्वमूर्त्तिं प्रकटयताऽवतारिणा । सद्भ्यः समीपविष्टसज्जनेभ्यः । मुख्यः । स्वस्य येऽवतारा इह प्रादुर्भावास्तेषां हेतुः । उदीरितः । भक्तितनयः । अवतारिश्रीहरिः । मे मह्यम् । स्वस्येक्षणादेर्दर्शनादेर्यत्सुखं तत्प्रददातीति तथोक्तः । अस्तु ॥ १४६ ॥

स्वस्य प्रसन्नताहेतून् यो जगाद गुणान्हरिः ।
मयि तद्गुणदृष्ट्यैव प्रसन्नः सोऽस्तु धर्मजः ॥ १४७ ॥

स्वस्येति । यः । हरिः । स्वस्य । प्रसन्नताया हेतून् हेतूभूतान् गुणान्निर्मत्सरत्वादीन् । जगाद । धर्मजः । स श्रीहरिः । मयि ते निर्मत्सरत्वादयो ये गुणास्तेषां दृष्ट्या वीक्षणेन । एव । प्रसन्नः । अस्तु भवतु ॥ १४७ ॥

गृहस्थानां स्वभक्तानां यथा स्वस्मिन्मनः स्थिरम् ।
यथोत्पन्नो विरागः स्यान्मायिकेषु च वस्तुषु ॥ १४८ ॥

गृहस्थानामिति । स्वभक्तानाम् । गृहस्थानाम् । मनः । यथा । स्वस्मिन् । स्थिरं स्यात् । दिव्यनराकारे भगवति स्वस्मिंस्तन्मनोवृत्तिरखंडं यथा तिष्ठेदित्यर्थः । यथा च । मायिकेषु । वस्तुषु । विरागः । उत्पन्नः । स्याद्भवेत् ॥ १४८ ॥

स्वभक्तैरधिगम्यस्यात्यंतिकश्रेयसो यथा ।
लक्षणं तत्प्राप्तलक्ष्म यथास्त्येतच्चतुष्टयम् ॥ १४९ ॥

स्वभक्तैरिति । यथा च । स्वभक्तैः । अधिगम्यस्य प्राप्यस्य । आत्यंतिकं यच्छ्रेयः कल्याणं तस्य । लक्षणम् । अस्ति । यथा च । तदात्यंतिकं श्रेयः प्राप्तं येन तस्य लक्ष्म लक्षणमस्ति । एतत् । चतुष्टयम् ॥ १४९ ॥

श्रीहरिः स्वीयभक्तेभ्यो यो जगाद दयानिधिः ।
श्रेय आत्यंतिकं दद्याद् भक्तिधर्मसुतः स मे ॥ १५० ॥

श्रीति । दयानिधिः । यः । श्रीहरिः स्वीयभक्तेभ्यः । जगाद । भक्तिधर्मसुतः । स श्रीहरिः । मे मह्यम् । आत्यंतिकम् । श्रेयः । दद्यात् ॥ १५० ॥

स्वशक्तिभ्यामणीयस्त्वं महीयस्त्वं स्वकीयकम् ।
सफलं प्राह यः स्वामी स मे दृग्गोचरोऽस्तु वै ॥ १५१ ॥

स्वेति । यः । स्वशक्तिभ्यां सूक्ष्मस्थूलाख्याभ्याम् । स्वकीयकम् । स्वस्येत्यर्थः । अणीयस्त्वं सूक्ष्मेभ्यः सूक्ष्मत्वम् । महीयस्त्वं स्थूलेभ्यः स्थूलत्वम् । सफलं फलसहितं यथा तथा । प्राह । सः । स्वामी । मे । दृग्गोचरः । अस्तु ॥ १५१ ॥

कोपदौष्ट्यं तज्जयं च स्वीयभक्ताग्रगुणाग्रहम् ।
यः प्राह श्रीहरिर्मेऽस्तु रक्षकः स हि सर्वतः ॥ १५२ ॥

कोपेति । यः । कोपस्य क्रोधस्य यद्दौष्ट्यं दुष्टत्वं तत् । तस्य कोपस्य जयं पराजयोपायं च । स्वीयभक्तानां येऽगुणा दोषास्तेषां योऽग्रहोऽनुपादेयत्वं तं च । प्राह । सः । श्रीहरिः । सर्वतो हि । कोपादिसर्वदोषेभ्य एव । मे । रक्षकः । अस्तु ॥ १५२ ॥

स्वप्रीत्यर्थं स्वभक्तानां तपःकार्यमुपादिशत् ।
यः श्रीहरिः स दत्तान्मे तपस्येव रुचिं सदा ॥ १५३ ॥

स्वेति । यः कालकर्ममायादिनियंतृत्वेन सर्वेषां मुख्यकर्तृत्वादिना च प्रसिद्धः । श्रीहरिः । स्वभक्तानां स्वभक्तैः । स्वस्य प्रीत्यर्थं प्रसन्नतायै । तपः । कार्यम् । इति । उपादिशत्सदृष्टांतं तानबोधयत् । स श्रीहरिः । मे मह्यम् । सदा । तपसि । एव । रुचिं प्रीतिम् । दत्तात् ॥ १५३ ॥

स्वस्मिन् प्रीतिमतो लक्ष्म तेनाप्याज्ञां च यः स्वकाम् ।
पाल्यां प्राह हरिर्दद्यात्प्रीतिमाज्ञायुतां स मे ॥ १५४ ॥

स्वस्मिन्निति । यः स्वैकनिष्ठस्वाज्ञापालकोत्तमभक्तवियोगमसहमानः संस्तत्सहचरत्वेन प्रसिद्धः । स्वस्मिन् । प्रीतिमतः स्नेहवद्भक्तस्य । लक्ष्म लक्षणम् । तेन तथाविधभक्तेन । अपि । पाल्यामवश्यपालनीयाम् । स्वकाम् । आज्ञां च । मयि स्नेहाढ्यभक्तेन तु मदाज्ञाऽवश्यं पाल्येति चेत्यर्थः । प्राह तान्सदृष्टांतमाह । सः । हरिः । मे मह्यम् । आज्ञायुतां प्रीतिं स्वदृढाज्ञापालनाढ्यं स्वस्मिन्सर्वाधिकप्रेम । दद्यात् ॥ १५४ ॥

पृथक्तां कारणाद्देहात्स्वभक्तानां समाधनाम् ।
स्ववार्त्तानां च दिव्यानां माहात्म्यं सर्वतोऽधिकम् ॥ १५५ ॥

पृथक्तामिति । स्वभक्तानाम् । कारणात् । देहात् । समाधनाम् । पृथक्ताम् । पृथग्भवनोपायामित्यर्थः । दिव्यानाम् । स्ववार्त्तानाम् । सर्वतः सर्वशास्त्रसजनवाक्येभ्यः । अधिकम् । माहात्म्यं च ॥ १५५ ॥

यः प्राह श्रीहरिः स्वामी भक्तिधर्मसुतः प्रभुः ।
तस्य ता हृदये संतु सुस्थिराः सर्वदा मम ॥ १५६ ॥

इति श्रीकार्यायनोक्तरंगाः समाप्ताः

य इति । प्रभुः । परमेश्वरः । अत एव । स्वामी अक्षरादिसर्वाधिपतिः । भक्तिधर्मसुतः । यः । श्रीहरिः । प्राह सम्यान्प्रत्याह । तस्यावतारिश्रीपरमेश्वरस्य । ता वार्त्ताः । मम स्वमूर्त्तिध्यानस्ववचनदृढस्थितिरूपतदुक्तोपायेन कारणदेहात्पृथग्जातस्य मे । हृदये । सर्वदा । सुस्थिराः सुतरां निश्चलाः संतु तिष्ठंतु ॥ १५६ ॥

इति श्रीहरिवाक्यसुधासिंधौ कार्यायनोक्ततरंगाः समाप्ताः ॥

---

अथ लौहग्रामोक्ततरंगाः प्रारभ्यन्ते

आनंदयन्स्वानष्टानां सतां प्रश्नोत्तराणि यः ।
कुर्वंश्चक्र हितं स्वानां स हरिर्मेद्धितं क्रियात् ॥ १५७ ॥

आनंदयन्निति । यः क्रोधहेयतावश्यतां प्रतिपादयन्प्रभुः । स्वान्स्वाश्रितान् । आनंदयन्सन् । अष्टानाम् सतां मुनीनाम् । प्रश्नानां कामोन्मूलनसाधनत्रिविधवैराग्यभेदत्रिविधज्ञानिभक्तभेदपरिपूर्णज्ञानिजनाकृतार्थताहेतुकामाद्यंतरशत्रुनाशोपायसंपूर्णसत्संगवद्भक्तलक्षण-भगवद्भक्तमाहात्म्यशास्त्रलक्षणहृद्यागततद्भक्तदोषनाशोपायेत्यष्टानुयोगानां यान्युत्तराणि तानि । कुर्वन्सन् । स्वानां स्वभक्तानाम् । हितम् । चक्रे । सः । हरिः । मद्धितम् । क्रियात् ॥१५७॥

चतुर्विधानां भक्तानां स्वस्य लक्ष्माणि यो हरिः ।
सर्वहेतोश्चाह बलं स्वस्य मद्धृदि सोऽस्तु वै ॥ १५८ ॥

चतुरिति । यः । चतुर्विधानां ज्ञानी शूरो विश्वस्तः स्निग्धश्चेति चतुःप्रकाराणाम् । स्वस्य । भक्तानाम् । लक्ष्माणि । सर्वेषां हेतोः कारणस्य । स्वस्य । बलं सर्वकार्येभ्योऽधिकबलवत्वं च । आह । सः । हरिः । मद्धृदि । अस्तु वै सदैव साक्षात्तिष्ठतु ॥ १५८ ॥

स्वस्य च स्वसतां यस्य माहात्म्यज्ञानयुग्भवेत् ।
निश्चयस्तस्य लक्ष्माणि स्वभक्तस्य यथार्थतः ॥ १५९ ॥

स्वस्येति । यस्य स्वभक्तस्य । स्वस्य । स्वसतां स्वैकांतिकभक्तानां च । माहात्म्यज्ञानयुक् । निश्चयः । भवेत् । तस्य । स्वभक्तस्य । लक्ष्माणि । यथार्थतो याथार्थ्येन ॥१५९॥

यः श्रीहरिः स्वयं स्वामी जगाद पुरुषोत्तमः ।
स्वभक्तं कुरुतादेव दयया तादृशं स माम् ॥ १६० ॥

य इति । यः पुरुषोत्तमः । स्वयम् । स्वामी । जगाद । सः । श्रीहरिः । दयया । माम् । तादृशमेव । स्वभक्तम् । कुरुतात् ॥ १६० ॥

सर्वावतारधारित्वं योगैश्वर्यं तथात्मनः ।
वर्णितं येन स हरिः सर्वदाऽस्तु मदात्मनि ॥ १६१ ॥

सर्वेति । येन एकमेवाद्वितीयं ब्रह्मेति श्रुत्युक्तो दिव्यमूर्त्तिः स्वयमेकः सन्ननंतस्वरूपैरनंतधामस्वनंतांडेषु स्थितवता परब्रह्मणा । आत्मनः स्वस्य । सर्वावतारधारित्वम् । तथा । योगैश्वर्यं च । वर्णितम् । सः । हरिः । सर्वदा मदात्मनि । अस्तु साक्षात्तिष्ठतु ॥ १६१ ॥

स्वकीयानष्टकृत्वस्तु प्रश्नान्पृष्ट्वा सतः स्वयम् ।
प्राहोत्तराणि यः स्वामी तद्वाचः संतु मद्धृदि ॥ १६२ ॥

स्वकीयानिति । यः । स्वामी । स्वकीयान् । सतो मुनीन् । अष्टकृत्वः प्रश्नान् निश्छद्मछद्मज्ञापकसंकल्पकथनाकथनमिति । दंभिबोधनलक्ष्मेति दंभकृद्भगवन्निश्चयबोधनलक्ष्मेति भगवन्निश्चयस्वधर्मपातनापातनसंकल्पज्ञानेति सत्संगबद्धमूलाबद्धमूललक्ष्मेतींद्रियनिग्रहभक्तिज्ञानसिद्धिकृत्साधुशास्त्रस्वविचारासयुक्तिज्ञानेति बाह्यांतरेंद्रियैकयज्जयोभयजयेति द्विविधतज्जयसाधने चेत्यष्टवारान्प्रश्नान् । पृष्ट्वा । स्वयम् । उत्तराणि । प्राह । तस्य श्रीस्वामिनारायणस्य वाचो वचनानि । मद्धृदि । संतु स्थिरीभवंतु ॥ १६२ ॥

नवकृत्वो य आत्मीयान्प्रश्नान्पृष्ट्वा सतो हरिः ।
स्वयं तदुत्तराण्याह ताः स्युर्मद्धृदि तद्गिरः ॥ १६३ ॥

नवेति । यः । हरिः । आत्मीयान् । सतो मुनीन् । नवकृत्वोऽकवारान् । प्रश्नान् सत्संगिनां दुर्लभं किं साधनीयमिति पाल्यधर्माणामेको मुख्यः कः भक्तिसाधनानामग्र्यं तत्किमिति सद्वाक्यैर्मतिवृत्तिः का न परावर्त्या का परावर्त्येति । त्यागिगृहिधर्मस्थभक्तः कः संगार्हः को नेति कस्याग्रे मानो रक्ष्यः कस्याग्रे न रक्ष्य इति कीदृग् हरेर्वचो न मान्यमिति । भगवद्ध्याने जायमानाः सत्तर्काः केनोपायेन शम्या इति । तादृशः क एको दोषो यस्यजनेन सर्वे ते त्यक्ताः स्युस्तादृशः क एको गुणो यदागमनेन सर्वे ते प्राप्ताः स्युरिति । हर्याज्ञयाऽपि कीदृग्देशो न सेव्यः कीदृक् शास्त्रं सेव्यमिति चानुयोगान् । पृष्ट्वा । तेषां यान्युत्तराणि तानि । आह । ता अत्रोक्ताः । तस्य श्रीहरेर्गिरो वचांसि । मद्धृदि स्युः स्थिरा भवंतु ॥ १६३ ॥

मुक्तिहेतुं स्वस्वरूपज्ञानं माहात्म्ययुक् तु यः ।
तद्दर्शनयुतं प्राह स हरिस्तद्ददातु मे ॥ १६४ ॥

मुक्तीति । योऽनन्यभक्त्याद्यसाक्षात्स्वज्ञानेन प्राप्यः प्रभुः । मुक्तेर्हेतुं कारणभूतम् । माहात्म्ययुक् । तस्य साक्षात्स्वस्य दर्शनेन युतं युक्तं च । स्वरूपज्ञानम् । प्राह । सः हरिः । मे मह्यम् । तत्तथाविधस्वस्वरूपज्ञानम् । ददातु ॥ १६४ ॥

प्रश्नोत्तरात्मकैर्वाक्यैः स्वस्य स्वान् यः सतो हरिः ।
चक्रे हर्षान्वितांस्तस्य तानि संत्वेव मे हृदि ॥ १६५ ॥

प्रश्नेति । यः । हरिः । स्वान् । सतो मुनीन् । स्वस्य । प्रश्नोत्तरात्मकैः । वाक्यैः । हर्षान्वितान् । चक्रे । आदौ मुक्तानंदमुनिपृष्टस्वल्पज्ञस्यान्यदोषग्रहणं संभवेदपि बहुविदस्तद्ग्रहणं कथमिति प्रश्नस्योत्तरं श्रीहरिर्दत्वा । कामक्रोधाद्यन्तरारीणामवस्थाभिर्यथा तीक्ष्णत्वमंदत्वे स्तस्तथा सद्विचारेण मंदत्वमस्ति वा नेति । व्यसनानि प्रारब्धकर्मवशतो वा क्रियमाणानीति च प्रश्नौ तदुत्तरे च स्वयं कृत्वा । प्राक्कर्मजोऽद्यतनो वा दुःस्वभावः कथं ज्ञेय इति कपिलेश्वरानंदमुनिकृतप्रश्नोत्तरं च स्वयं कृत्वा चंचलसर्वेन्द्रियपृथक्पृथक्स्थैर्योपाया इति कस्मिंश्चिदिन्द्रिये विजिते सर्वाणि तानि जितानि स्युरिति । हृदि व्याप्तकामः कथं बहिर्लक्ष्य इति केन विचारेण शांतोऽपि चंचलः, चंचलोऽपि शांतश्च भवेदिति श्रीमद्भागवताद्यष्टसच्छास्त्रेषु किमपि हेयमस्ति वा नेति तुल्यसंगशास्त्रभोजनोपदेशादीनां सतीर्थ्यानां भवतां मध्ये तारतम्यं कथमिति षट्प्रश्नोत्तराणि स्वयमेव कृत्वा स्वसाधून् य आनंदयदित्यर्थः । तस्य श्रीहरेः । तानि प्रश्नोत्तरवाक्यानि । मे हृदि । संतु तिष्ठंत्वेव ॥ १६५ ॥

यो हेतुं प्राह धर्मादिचतुर्णां स्वान् सतो हरिः ।
स्वैकांतभक्तेर्हेतूनां तत्पुष्टिं मे ददातु सः ॥ १६६ ॥

य इति । यः । हरिः । स्वान् । सतो मुन्यादिसज्जनान्प्रति । स्वस्यैकांतभक्तेः प्रेमलक्षणाख्यैकांतभक्तेः । हेतूनाम् । धर्मादयो ये चत्वारो धर्मज्ञानवैराग्यनवविधभक्तयस्तेषाम् ।

हेतुमुत्पत्तिकारणम् । प्राह । स श्रीहरिः । मे मह्यम् । तेषां धर्मादीनां या पुष्टिः पोषणं ताम् । ददातु ॥ १६६ ॥

स्वसतामनुयोगानामुत्तराणि विधाय यः ।
हरिस्तान्हर्षयामास मम हर्षप्रदोऽस्तु सः ॥ १६७ ॥

स्वेति । यः । स्वसताम् । स्वसद्भिः कृतानामित्यर्थः । अनुयोगानां प्रश्नानाम् । उत्तराणि विधाय । तान्स्वसाधून् । हर्षयामास । सामान्यगाढस्नेहकारणम् । मंदमध्यतीव्रेति-त्रिविधवृत्तिवेगास्तेषां हेतुर्लक्षणानि च जीवात्मपरमात्मज्ञाननिष्ठादार्ढ्यम् । यथा माया दुःखदा सुखदा चास्त्येतत्सर्वप्रश्नोत्तराणि कृत्वा यस्तानानंदयदित्यर्थः । सः । हरिः । मम मह्यम् । हर्षं-प्रदः अस्तु ॥ १६७ ॥

असत्संमतसच्छास्त्रसिद्धांतत्यागपूर्वकम् ।
सत्संमतं च सच्छास्त्रसिद्धांतं कृपया निजान् ॥ १६८ ॥

असदिति । असद्भिः संमतो यः सच्छास्त्रसिद्धांतस्तस्य त्यागपूर्वकं यथा तथा । कृपया निजान्स्वभक्तान् । सद्भिः संमतम् । सच्छास्त्रसिद्धांतम् ॥ १६८ ॥

यो हरिर्ग्राहयामास स्वयं ब्रह्मपुरेश्वरः ।
सिद्धांतं सन्मतं कुर्यात्सुदृढं तं स मद्धृदि ॥ १६९ ॥

य इति । ब्रह्मपुरेश्वरः । स्वयम् । यः हरिः । ग्राहयामास । स श्रीहरिः । मद्धृदि । सन्मतम् । तं सच्छास्त्रसंबंधिनम् । सिद्धांतम् । सुदृढम् । कुर्यात् ॥ १६९ ॥

निश्चयं स्वस्वरूपस्य सविकल्पं त्रिधा तथा ।
निर्विकल्पं त्रिधा प्राह तं पृथक् लक्षणैस्तु यः ॥ १७० ॥

निश्चयमिति । यः । स्वस्वरूपस्य त्रिविधा । सविकल्पम् । निश्चयम् । तथा । त्रिधा निर्विकल्पम् । तं निश्चयम् । पृथक् तु पृथक् पृथक् । लक्षणैः प्राह ॥ १७० ॥

स श्रीहरिर्भक्तिधर्मसुतोऽक्षरपदेश्वरः ।
उत्तमं निर्विकल्पं मे ददातु स्वस्य निश्चयम् ॥ १७१ ॥

स इति । अक्षरपदेश्वरः । भक्तिधर्मसुतः । सः । श्रीहरिः । मे मह्यम् उत्तमम् । स्वस्य । निर्विकल्पम् । निश्चयम् । ददातु ॥ १७१ ॥

येषां बाधो न बाधः स्याद्देशाद्यैरशुभैरपि ।
तद्भेदमुक्त्वा यः स्वस्याक्षरतोऽपि परस्य च ॥ १७२ ॥

येषामिति । यः अशुभैः । अपि । देशाद्यैः । येषां भगवद्भक्तानाम् । बाधः । न स्यान्न-भवेत् । येषां च बाधः स्यात् । तेषां यो भेदस्तम् । उक्त्वा । अक्षरतः सर्वोत्तमादक्षरब्रह्मणः सकाशादपि । परतः सर्वथोत्तमस्य । स्वस्य श्रीपुरुषोत्तमस्यात्मनः ॥ १७२ ॥

मुक्तानामक्षरस्थानां भेदमत्यंतमाह सः ।
श्रीहरिः स्वस्य भक्तिं मे देयाद्ब्रह्मात्मना पराम् ॥ १७३ ॥

मुक्तानामिति । अक्षरस्थानाम् । मुक्तानां च । अत्यंतस्वामिसेवकभावात्मकमतिशयितम् । भेदं पृथक्त्वम् । आह । सः । श्रीहरिः । मे मह्यम् । ब्रह्मात्मना ब्रह्मरूपेण करणीयामित्यर्थः । परां प्रेमलक्षणाभिधाम् । स्वस्य । भक्तिम् । देयात् ॥ १७३ ॥

संशिक्षणार्थं यः स्वानां स्वस्याक्षरपदेशितुः ।
अनंताक्षरमुक्तौघैः सेवितस्यातिभावतः ॥ १७४ ॥
सदा दिव्याकृतेः कृष्णाख्यस्याशयमशेषतः ।
कृपया प्राह स हरिर्मां कुर्यात्तदनुव्रतम् ॥ १७५ ॥

समिति । सदेति । यः । स्वानां स्वैकांतिकभक्तानाम् । सं सम्यक् शिक्षणार्थं ज्ञात्वा तदनुसारेण वर्त्तनार्थम् । अक्षरपदस्येशितुरधिपतेः । अनंता येऽक्षरमुक्ता अक्षरब्रह्मसाधर्म्यं प्राप्ताः स्वानन्यभक्तास्तेषामोघैः समूहैः । अतिभावतः । सेवितस्य । सदा दिव्याकृतेः । कृष्णाख्यस्याद्यनादिश्रीकृष्णनाम्नः । स्वस्य । अशेषतः समग्रतया । आशयं सिद्धांतम् । कृपया प्राह । सः । हरिः । माम् । तदनुव्रतं स्वसिद्धांतानुसारितया सदा वर्त्तमानम् । कुर्यात् इति ॥ १७४–१७५ ॥

उक्त्वा यो व्यापकत्वं तु देहे जीवस्य तत्त्वतः ।
अंतर्यामितया स्वस्य जीवे व्यापकतां यथा ॥ १७६ ॥

उक्त्वेति । यः । तत्त्वतः समग्रतया । जीवस्य । देहे । व्यापकत्वम् । उक्त्वा । यथा यथावत् । जीवे । स्वस्य । अंतर्यामितया । व्यापकताम् । जातित्वाज्जीवस्य देहे जीवे इत्येकवचनम् ॥ १७६ ॥

जगाद श्रीहरिः स्वामी प्रश्नोत्तरविधानतः ।
मदात्मनि सदा सोऽस्तु दर्शनादिसुखप्रदः ॥ १७७ ॥

जगादेति । प्रश्नोत्तराणां यद्विधानं करणं तेन । जगाद । स्वामी सर्वाधिपतिः । सः । श्रीहरिः । सदा । मदात्मनि दर्शनादेः स्वेक्षणादेर्यत्सुखं तत्प्रददातीति तथोक्तः । अस्तु ॥ १७७ ॥

प्रश्नोत्तरात्मकैः स्वस्यातर्पयद्यो वचोऽमृतैः ।
सतः स्वान् श्रीहरेस्तस्य तानि मद्धृदि संतु वै ॥ १७८ ॥

प्रश्नेति । यः स्वान् । सतो मुन्यादीन् । प्रश्नोत्तरात्मकैः स्वस्य । वचोऽमृतैः । अतर्पयत् । तीक्ष्णाकुंठितनिर्मूलविषयवासनालक्षणानि तन्निर्मूलभवनसाधनानि च साधनांतरान्माहात्म्यज्ञानाढ्यभक्तेर्महत्ता च दंभ्यभिज्ञानलक्षणानि च सर्वगुणानां दोषरूपकरदोषकथनं च मानाख्यदोषस्य सद्भावहेतुत्वं च भगवत्तद्भक्तमाहात्म्यबोधेन तद्दोषनाशोपायश्चेत्यादिवचोऽमृतैः स्वानतोषयदित्यर्थः । तस्य । श्रीहरेः । तानि वचोऽमृतानि । मद्धृदि । संतु वै तिष्ठंत्वेव ॥ १७८ ॥

नित्यानंदमुनेर्मुक्तानंदस्य च महामुनेः ।
प्रश्नोत्तराणि यः कृत्वा तावन्यांश्च सतो निजान् ॥ १७९ ॥

श्रीहरिर्हर्षयामास भृशं लोकोत्तरैस्तु तैः ।
तस्य तान्येव वाक्यानि संतु मद्धृदि सर्वदा ॥ १८० ॥

नित्यानंदमुनेरिति । श्रीहरिरिति । यः । श्रीहरिः । नित्यानंदमुनेः । मुक्तानंदस्यैतदाख्यस्य च । महामुनेः । प्रश्नानां यान्युत्तराणि तानि । कृत्वा । लोकोत्तरैः प्रकृत्युत्पन्नकरणकलेवरैः कालतंत्रैश्च कैश्चिदपि वक्तुमशक्यैः । तैः प्रश्नोत्तरैः । देशकालादिवैषम्येऽपि यः स्वभक्तो विपरीततां नानुयायात्तत्साधनानि यस्य मायिकार्थेष्वरुचिस्तस्य लक्षणानि यथा तेष्वरुचिर्भवेत्तथा भगवत्तद्भक्तमाहात्म्यज्ञानाद्युपाय एतदादिभिरित्यर्थः । तौ स्वकीयौ महांतौ अन्यान्सभ्यांश्च । निजान् । सतः सज्जनान् । भृशम् । हर्षयामास । यस्य श्रीहरेः । तानि एव । वाक्यानि सर्वदा । मद्धृदि । संतु । इति ॥ १७९–१८० ॥

उक्त्वैक्यं दिव्यमनुजभावयोः स्वस्य तत्त्वतः ।
दार्ढ्यं स्वनिश्चयस्याह यो हरिः सोऽस्तु मद्धृदि ॥ १८१ ॥

उक्त्वेति । यः । स्वस्य । दिव्यमनुजभावयोर्दिव्यभावस्य मनुष्यभावस्य च । ऐक्यमेकत्वम् । तत्त्वतः सिद्धांतत्वेन । उक्त्वा । स्वस्य स्वरूपस्य यो निश्चयस्तस्य । दार्ढ्यं दृढत्वम् । आह । सः । हरिः । मद्धृदि । अस्तु ॥ १८१ ॥

नैकावतारैर्विहितस्वभक्तकार्यं कृपासागरमात्मतंत्रम् ।
पदेऽक्षरे स्वेऽर्चितमक्षरात्मभक्तैः स्वकैः श्रीहरिकृष्णमीडे ॥ १८२ ॥

इति लौहग्रामोक्ततरंगाः समाप्ताः ॥

नैकेति । नैकावतारैर्मुहुर्ब्रह्मांडेषु जनदृग्गोचरकृतस्वस्वरूपैः । विहितानि स्वभक्तकार्याणि येन तम् । कृपासागरम् । आत्मतंत्रं स्वतंत्रम् । स्वे स्वकीये । अक्षरे धाम्नि । स्वकैः । अक्षरोऽक्षरब्रह्मतुल्य आत्मा स्वरूपं येषां तैर्भक्तैः । अर्चितं पूजितं संतं विराजमानमित्यर्थः । श्रीहरिकृष्णं श्रीसहजानंदस्वामिनम् । ईडेऽहं स्तौमि ॥ १८२ ॥

इति श्रीहरिवाक्यसुधासिंधौ लौहग्रामोक्ततरंगाः समाप्ताः ॥

अथ पञ्चालखेटोक्ततरंगाः प्रारभ्यन्ते ॥

यः स्वभक्तान्ससौख्यस्य निरवध्यतिशायिताम् ।
अब्रवीच्छ्रीहरिर्मह्यं दत्तात्स्वसुखमेव सः ॥ १८३ ॥

य इति । यः । स्वभक्तान् । स्वस्य । स्वस्य स्वमूर्त्यार्द्धैर्यत्सौख्यं सुखं तस्य । निरवध्यतिशायितामवधिवर्जितसर्वोत्तमताम् । अब्रवीद् दृष्टांतैरुवाच । सः । श्रीहरिः । मह्यम् । स्वसुखमुक्तविधनिजानंदमेव । दत्तात् ॥ १८३ ॥

सांख्ययोगमते उक्त्वा स्वैरुपास्यमुवाच यः ।
हरिः स्वीयं स्वरूपं स्वान् स उपास्यः सदास्तु मे ॥ १८४ ॥

सांख्येति । यः । स्वान्स्वभक्तान्प्रति सांख्ययोगयोर्मते सिद्धांते । उक्त्वा । स्वैः स्वभक्तैः । उपास्यम् । स्वीयम् । स्वरूपम् । उवाच । सः । मे । सदा । उपास्यः अस्तु ॥ १८४ ॥

ईर्ष्यामानादयो दोषा नाशं यायुर्यथाऽखिलाः ।
तदुपायं स्वभक्तानामुक्त्वा यो दयया हरिः ॥ १८५ ॥

ईर्ष्येति । यः । हरिः । स्वभक्तानाम् । दयया । ईर्ष्यामानादयः । अखिलाः सर्वे । दोषाः । नाशम् । यायुः प्राप्नुयुः । तदुपायं तथाविधोपायम् । उक्त्वा ॥ १८५ ॥

मनीषिभिः स्वभक्तैस्तु स्वस्मिन्प्रीतिर्यथा दृढा ।
कार्या तद्रीतिमाचख्यौ तस्मिन् साप्रीतिरस्तु मे ॥ १८६ ॥

मनीषिभिरिति । मनीषिभिर्बुद्धिमद्भिः । स्वभक्तैस्तु । स्वस्मिन् । दृढा । प्रीतिः । कार्या । तस्या या रीतिः पद्धतिस्ताम् । आचख्यौ । तस्मिन् श्रीहरौ . मे । सा तदुक्तविधा । प्रीतिः । अस्तु ॥ १८६ ॥

उक्त्वैक्यं स्वस्वरूपस्य दिव्यस्य मानवस्य च ।
स्वज्ञानदार्ढ्यं यः प्राह तद्दत्तां श्रीहरिः स मे ॥ १८७ ॥

उक्त्वेति । यः । दिव्यस्य । मानवस्य च स्वस्वरूपस्य । ऐक्यमेकत्वम् । उक्त्वा दृष्टांतैर्गदित्वा । स्वस्य स्वस्वरूपस्य यज्ज्ञानं तस्य दार्ढ्यं दृढत्वम् । प्राह । सः । श्रीहरिः । मे मह्यम् । तत्स्वस्वरूपज्ञानम् । दत्तां ददातु ॥ १८७ ॥

मानं स्वस्य स्वभक्तानां पुरो रक्ष्यं न तद्द्रुहाम् ।
पुरो रक्ष्यं च यः प्राह स हरिर्मां ततोऽवतात् ॥ १८८ ॥

मानमिति । यः । स्वस्य । स्वभक्तानां च । पुरोऽग्रे । न । रक्ष्यम् । मानम् । प्राह । भक्तैर्भगवत्तद्भक्ताग्रेऽभिमानो न रक्ष्यं इति प्राहेत्यर्थः । तद्द्रुहां भगवत्तद्भक्तद्रोहकारिणाम् । पुरश्चाग्रे तु । रक्ष्यं मानं प्राह । सः । हरिः । माम् । ततो मानदोषात् । अवताद्रक्षतु १८८॥

परोक्षप्रियतारूपं स्वस्वभावं प्रदर्शयन् ।
स्वभक्तान्स्वस्वरूपाणामैश्वर्याणां च सर्वशः ॥ १८९ ॥

परोक्षेति । स्वभक्तान् । परोक्षप्रियतारूपम् । स्वस्वभावम् । प्रदर्शयन्सन् । सर्वशः सर्वेषाम् । स्वस्वरूपाणाम् । ऐश्वर्याणां स्वैश्वर्याणां च ॥ १८९ ॥

स्वस्यैव यः कारणत्वं परोक्ष्येणाह तत्त्वतः ।
श्रीहरिः स प्रियो मेऽस्तु भक्तिधर्मसुतः प्रभुः ॥ १९० ॥

स्वस्येति । स्वस्यैव । कारणत्वम् । तेषां स्वयमहमेव कारणमस्मीत्यर्थः । पारोक्ष्येण परोक्षत्वेन । यः । श्रीहरिः । तत्त्वतो याथार्थ्येन । आह । भक्तिधर्मसुतः । प्रभुः । स श्रीहरिः मे । प्रियः प्रेष्ठः । अस्तु ॥ १९० ॥

पारोक्ष्येण स्वस्वरूपज्ञानं यस्तत्त्वतो हरिः ।
स्वभक्तानाह तज्ज्ञानदार्ढ्यं मयि करोतु सः ॥ १९१ ॥

पारोक्ष्येणेति । यः । स्वभक्तान्प्रति । तत्त्वतः । स्वस्मिन्सदैव दिव्याकारस्य सत्त्वान्मायिकाकृतेर्निषेधान्मनुष्यनाट्येन तद्भावदर्शनं नटमायावदज्ञजनमोहकृदिति । याथार्थ्येन स्वस्वरूपज्ञानम् । पारोक्ष्येण । आह यत्र त्रिसर्गो मृषेत्यादिप्रमाणपूर्वकं जगाद । सः । मयि । तस्योक्तविधस्वस्वरूपस्य यज्ज्ञानं तस्य दार्ढ्यम् । करोतु ॥ १९१ ॥

श्रीहरिर्निगमगीतसद्यशा अक्षराच्च परतः परः प्रभुः ।
सर्वजीवसुखकारकः पिता भक्तिधर्मतनयोऽस्तु मद्धृदि ॥ १९२ ॥

इति पंचालखेटोक्ततरंगाः समाप्ताः

श्रीहरिरिति । निगमैर्वेदादिशास्त्रैर्गीतं सद्यशो यस्य सः । परतः सर्वेभ्यः श्रेष्ठात् । अक्षरात् । पराः श्रेष्ठास्तदुपास्य इत्यर्थः । प्रभुर्महासमर्थश्च । सर्वजीवानां सुखकारकः सुखकारणाद्धेतोरित्यर्थः । भक्तिधर्मयोस्तनयः पुत्रत्वं प्राप्तः । पिता स्वेन मां दत्तपुत्रत्वेन स्वीकाराद्रघुवीराचार्यस्य मम पिता । श्रीहरिः । मद्धृदि । अस्तु ॥ १९२ ॥

इति श्रीहरिवाक्यसुधासिंधौ पंचालखेटोक्ततरंगाः समाप्ताः ॥

---

अथ मध्यमप्रकरणोक्ततरंगाः प्रारभ्यन्ते

मोहस्वरूपमुक्त्वा यस्तन्निवृत्तेः सुसाधनम् ।
स्वभक्तानाह स हरिर्निर्मोहं मां करोत्वरम् ॥ १९३ ॥

मोहेति । यः । स्वभक्तान् । मोहस्वरूपं मायिकविषयासक्तिरूपं तत्त्वम् । उक्त्वा सदृष्टांतं गदित्वा । तस्य मोहस्य या निवृत्तिस्तस्याः । सुष्ठु साधनम् । आह । सः । हरिः । माम् । अरं शीघ्रं यथा तथा । निर्गतो मोहो विषयासक्तिरूपो यस्य तथाविधम् । करोतु ॥ १९३ ॥

स्वभक्तानां श्रेयसस्तु प्राप्तेरात्यंतिकस्य यः ।
साधनं प्राह स हरिः साधनं तद्ददातु मे ॥ १९४ ॥

स्वेति । यः । स्वभक्तानाम् । आत्यंतिकस्य । श्रेयसो मोक्षस्य । प्राप्तेः । साधनम् । प्राह । सः । हरिः । मे मह्यम् । तत्तु तदेव । साधनम् । ददातु ॥ १९४ ॥

याभ्यां द्वाभ्यां तु मार्गाभ्यां स्वीयानां व्रजतामपि ।
भवेच्च संसृतिर्मोक्षस्तद्रीतिं तत्त्वतो निजान् ॥ १९५ ॥

याभ्यामिति । याभ्याम् । द्वाभ्यां शृंगाररसयुग्भक्तिरात्मज्ञानं चेत्युभाभ्याम् । मार्गाभ्यां तु । व्रजतां स्वं भजताम् । स्वीयानां स्वाश्रितानामपि । संसृतिर्जन्ममृतिरूपसंसारः । मोक्ष आत्यंतिकश्रेयश्च । भवेद्यथा स्यात् । तस्य या रीतिः प्रकारस्ताम् । तत्त्वतः । निजान्स्वभक्तान्प्रति ॥ १९५ ॥

जगाद श्रीहरिर्योऽत्र कृपया परयैव सः।
मोक्षहेतौ पथि दृढां स्थितिं मह्यं ददातु वै॥ १९६॥

जगादेति। यः। श्रीहरिः। परया सर्वोत्कृष्टयैव। कृपया। जगाद। स श्रीहरिः। अत्रास्मिंल्लोके वर्त्तमानायेत्यर्थः। मह्यम्। मोक्षस्य हेतौ कारणभूते। पथि निर्विघ्नमार्गे। दृढाम्। स्थितिम्। ददातु वै॥ १९६॥

प्रश्नोत्तरामृतरसपायनेन निजान् प्रभुः।
सुखितान् यश्चकारासौ हरिर्मां सुखितं क्रियात्॥ १९७॥

प्रश्नेति। यः। प्रभुः। निजान्स्वभक्तान्। प्रश्नानां धर्मे रक्षिते भक्तिर्गच्छेद्भक्तौ रक्षितायां च धर्मो गच्छेत्तथाविधापत्तौ सत्यां तयोः को रक्ष्य इति अधमोद्धारणत्वादि-भगवन्माहात्म्यवेदितुर्भक्तस्य केन विचारेण स्वधर्मे दृढा स्थितिः स्यादिति श्रीहरेरखंडचिंतनं केन साधनेन भवेदिति चानुयोगानां यदुत्तरामृतं तदेव रसस्तस्य पायनेन। सुखितान्संजातातिसुखान्। चकार असौ सः। हरिः माम्। सुखितं तद्वत्संजातोत्तमसुखम्। क्रियात्॥१९७॥

पातिव्रत्यं शौरवीर्यं स्वभक्तानां य आत्मनि।
श्रीहरिः प्राह ते मह्यं स्वस्मिन् दत्तात्स धर्मजः॥ १९८॥

पातिव्रत्यमिति। यः स्वभक्तानाम्। आत्मनि सर्वावतारकारणे स्वस्मिन्। पातिव्रत्यं पतिव्रताधर्मवत्त्वम्। शौरवीर्यत्वं च। प्राह। ते यथा स्वस्मिंस्तै रक्ष्ये तथाऽब्रवीदित्यर्थः। धर्मजः। सः। हरिः। मह्यम्। स्वस्मिन्। ते द्वे। दत्तात्॥ १९८॥

यो निंदां नास्तिकानां च शास्त्रेष्वास्तिकतां दृढाम्।
प्राहात्मनो विचारं स्वान् प्रीतः स्तात्स हरिर्मयि॥ १९९॥

य इति। यः स्वान्स्वभक्तान्प्रति। नास्तिकानाम्। निंदां दुष्टत्वम्। शास्त्रेषु। दृढाम् आस्तिकतां च। प्राह। शास्त्रेष्वास्तिक्यमेव परमार्थे समीचीनं दुःखहरणपूर्वकमहाचलसुख-प्रदमतो विधिनिषेधौ सत्यावेवेति प्रतिपादयन्सन्प्राहेत्यर्थः। आत्मनो द्रष्टृस्वात्मनः विचारं यस्मिन् कस्मिन्विलग्नस्वभावं स्वचित्तं वीक्ष्य खेदो न कार्यः, किंतु ततः पृथक्स्वात्मरूपेण भगवद्भक्तिः सदा कार्येत्येतत्प्रकारं तं च। प्राह सः। हरिः। मयि। प्रीतः प्रसन्नः। स्ताद्भवतु॥ १९९॥

एकादश्या व्रतस्योक्तं ज्ञानयज्ञस्य येन च।
कार्यत्वं स्वीयभक्तेभ्यः स हरिस्तद्ददातु मे॥ २००॥

एकादश्या इति। येन श्रीहरिणा। स्वीयभक्तेभ्यः। एकादश्याः। व्रतस्य। शुक्लकृष्ण-पक्षीयसर्वैकादशीव्रतानामित्यर्थः। ज्ञानयज्ञस्य च। कार्यत्वम्। उक्तम्। सः। हरिः। मे मह्यम्। तदेतदुभयकर्त्तव्यत्वम्। ददातु॥ २००॥

स्वभक्तानां दुःस्वभावात्यागे कारणमाह यः।
तन्नाशोपायमपि च स हरिर्मां ततोऽवतु॥ २०१॥

स्वेति। यः। स्वभक्तानाम्। दुःस्वभावानां योऽत्यागस्तस्मिन्। कारणम्। तेषां दुःस्वभावानां यो नाशस्तस्योपायं चापि। आह। सः। हरिः माम्। ततस्तेभ्यो दुःस्वभावेभ्यः अवतु रक्षतु ॥ २०१ ॥

स्वेषां स्वस्य स्वरूपावबोधनिष्ठा दृढोदिता।
येन श्रीहरिणा दद्यात्तां स मे भक्तिधर्मजः॥ २०२॥

स्वेषामिति। येन। श्रीहरिणा। स्वस्य। दृढा। स्वरूपावबोधनिष्ठा स्वरूपज्ञाननिष्ठा। स्वेषां स्वभक्ताग्रे। उदिता। भक्तिधर्मजः। स श्रीहरिः। मे मह्यम्। तां स्वस्वरूपज्ञाननिष्ठाम्। दद्यात् ॥ २०२ ॥

दिव्याकारे सदा स्वस्मिन् साधनानि सदारतेः।
ज्ञानवैराग्यभक्तीर्यः प्रोवाच लक्ष्मतः स्फुटम्॥ २०३॥

दिव्येति। यः श्रीहरिः। सदा। दिव्याकारे स्वस्मिन्। श्रीमद्भागवते श्रीवेदव्यासेन दिव्यसाकारत्वेन वर्णिते तथाप्यभक्तैस्तु निराकारत्वेन ज्ञाते भक्तैस्तु यथार्थतया दिव्याकारत्वेन ज्ञाते विराट्पुंसोऽध्यात्मादीनामाधारत्वेनांतर्यामितया च स्थिते सत्यपि पृथक्स्वब्रह्मधाम्न्यखंडं दिव्यसाकारस्वरूपेण स्थिते महामुक्तार्चितपादांबुजे स्वानन्यभक्तप्रेमवश्यत्वादत्रालौकिकनृनाटनं कुर्वंति स्वस्मिन्नित्यर्थः। सदारतेरखंडप्रीतेः। साधनानि साधनभूता इत्यर्थः। ज्ञानं च वैराग्यभक्तिश्च ताः। लक्ष्मतः पृथक्-पृथग्लक्षणैः। स्फुटं यथा तथा। प्रोवाच ॥ २०३ ॥

भक्तेरधिकतां तेषु यश्च स श्रीहरिः प्रभुः।
मह्यं स्वस्मिन् रतिं दद्याद्दययैव ससाधनाम्॥ २०४॥

भक्तेरिति। यश्च। तेषु साधनेषु मध्ये। भक्तेः। अधिकतामुवाच। प्रभुः। सः। श्रीहरिः। मह्यम्। दयया। एव। ससाधनाम्। स्वस्मिन्। रतिं गाढप्रीतिम्। दद्यात् २०४॥

क्रियासु स्वस्य भक्तानामभक्तानां समास्वपि।
प्रोक्तो येन महान् भेदो हरौ तस्मिन्मनोऽस्तु मे॥ २०५॥

क्रियास्वेति। येन। स्वस्य भक्तानाम्। अभक्तानां च। समासूपरिष्टादीक्षामात्रेण सदृशास्वपि क्रियासु। महान्मोक्षनरकप्रापकात्मकभूरितरः। भेदः। प्रोक्तः। तस्मिन्। हरौ। मे। मनः। अस्तु सदा तिष्ठतु ॥ २०५ ॥

प्रबलं पौरुषं त्वेकं स्वीयानां साधनं परम्।
निःश्रेयसार्थं येनोक्तं स हरिस्तद्ददातु मे॥ २०६॥

प्रबलमिति। येन। स्वीयानाम्। निःश्रेयसार्थम्। परं श्रेष्ठम्। एकम्। पौरुषं पुरुषप्रयत्नरूपम्। प्रबलं बलवत्तरम्। साधनम्। उक्तम्। सः। हरिः। मे मह्यम्। तत्स्वोक्तसाधनम्। ददातु ॥ २०६ ॥

सदा दिव्याकृतेः स्वस्य धाम्नि तेजोमयेऽक्षरे।
नित्यावासस्य पुरुषोत्तमाख्यस्य दयानिधेः॥ २०७॥

स्वेति । सदा । तेजोमये । अक्षरेऽक्षरब्रह्माख्ये । धाम्नि । नित्यमावासो यस्य तस्य । दिव्याकृतेः । अत्र मनुष्यभावमनुसृत्य स्थितस्यापीति शेषः । पुरुषोत्तमाख्यस्य । दयानिधेर्दयानिधित्वादत्र नृनाट्यमनुकुर्वत इत्यर्थः । स्वस्य ॥ २०७ ॥

सर्वोत्कृष्टं ज्ञानमुक्तं समाहात्म्यं निजाग्रतः ।
येन श्रीहरिणा तन्मे ज्ञानं स्वस्य ददातु सः ॥ २०८ ॥

सर्वेति । समाहात्म्यम् । सर्वोत्कृष्टम् । ज्ञानम् । येन । श्रीहरिणा । निजाग्रतः स्वैकांतिकभक्ताग्रे । उक्तम् । स श्रीहरिः । मे मह्यम् । स्वस्य स्वस्वरूपस्य । तत्स्वोक्तम् । ज्ञानम् । ददातु ॥ २०८ ॥

स्वकीयज्ञानमाहात्म्यं येन श्रीहरिणोदितम् ।
तस्मिन् दृढोपासनाऽस्तु भक्तिधर्मसुते मम ॥ २०९ ॥

स्वकीयेति । येन । श्रीहरिणा । स्वकीयस्य प्रत्यक्षस्वस्वरूपस्य यज्ज्ञानं पूर्वतरंगोक्तवद्वेदनं तस्य माहात्म्यम् । उदितम् । भक्तिधर्मसुते । तस्मिन् । श्रीहरौ । मम । दृढा । उपासना । अस्तु ॥ २०९ ॥

स्वभक्तानां दुःस्वभावो येनैकेन विचारतः ।
नष्टः स्यात्तं य ऊचे स श्रीहरिस्तं ददातु मे ॥ २१० ॥

स्वेति । यः । स्वभक्तानाम् । दुःस्वभावः । येन । एकेन । विचारतो विचारेण । नष्टः । स्यात् । तं विचारम् । ऊचे । धर्मज्ञानवैराग्यभक्तिभ्यो यः पुमान्न भ्रश्येत्तल्लक्षणमप्युवाचेति ज्ञेयम् । सः । श्रीहरिः । मे मह्यम् । तं दुःस्वभावविनाशकृद्विचारं धर्मादिभ्यो न पतेत्तल्लक्षणं चापि मे मह्यम् । ददातु ॥ २१० ॥

प्रश्नोत्तरात्मकैः स्वस्य श्रीहरिर्यो वचोऽमृतैः ।
निजानानंदयामास मह्यमानंददोऽस्तु सः ॥ २११ ॥

प्रश्नेति । यः । श्रीहरिः प्रश्नोत्तरात्मकैः प्रत्यक्षकृष्णस्वरूपनिष्ठायां धर्मनिष्ठाया अंतर्गतत्वात्साक्षात्तन्निष्ठायाः श्रेष्ठता विषयपराजयसाधनं तीव्रश्रद्धाढ्यपुंसो लक्षणमिंद्रियतीव्रताविनाशसाधनं श्रद्धावृद्धेः कारणं चैतदाद्यनुयोगप्रतिवचनरूपैः । स्वस्य वचोऽमृतैः । निजान्स्वाश्रितान् । आनंदयामास । स श्रीहरिः मह्यम् । आनंददः । अस्तु ॥ २११ ॥

सर्वाधारं च निर्दोषमक्षरादेर्नियामकम् ।
स्वरूपं प्राह यः स्वेभ्यो हरिर्मद्धृदि सोऽस्तु वै ॥ २१२ ॥

सर्वेति । यः । स्वेभ्यः स्वाश्रितेभ्यः । सर्वेषामक्षरतत्स्थमुक्तकालमायेश्वरजीवानामाधारम् । निर्दोषं सर्वथा कालत्रयदोषलेशवर्जितम् । अक्षरादेरक्षरब्रह्मादिसर्वेषाम् । नियामकं च । स्वं स्वकीयम् । रूपं स्वरूपम् । प्राह । भगवत्स्वरूपम् । मायिकतत्त्वैः सहितं वा ज्ञेयं तद्ध्यात्रा भक्तेन यादृङ्माहात्म्ययुक्तनिर्दोषस्वरूपवेदनप्रकारश्चेति प्रश्नोत्तरवार्त्तयोवाच । स वै स एव । हरिः । मद्धृदि । अस्तु सदैव साक्षात्तिष्ठतु ॥ २१२ ॥

नास्तिकानां नृणां संगं शुष्कज्ञानवतां च यः।
हरिः स्वैर्वर्ज्यमेवाह सोऽव्यात्तत्संगतो हि माम् ॥ २१३ ॥

नास्तिकानामिति । यः । स्वैः स्वभक्तैः । वर्ज्यं सर्वथा वर्जनीयमेव । नास्तिकानाम् । शुष्कज्ञानवार्त्ता च । नृणाम् । संगं सहवासभाषणादिप्रसंगम् । आह मदाश्रितैर्नास्तिकशुष्कज्ञानिजनानां प्रसंगः सर्वथा दूरतस्त्याज्य इति यः स्वान्प्राहेत्यर्थः । सः । हरिः । माम् । तत्संगतस्तेषां प्रसंगात् । अव्यादवश्यमवतात् ॥ २१३ ॥

शुष्कज्ञानवतां संगं संत्याजयितुमात्मनः।
भक्तांस्तेषां च धर्मस्य स्वभक्तैः सिद्धये तथा ॥ २१४ ॥

शुष्केति । आत्मनः स्वस्य । भक्तान् । शुष्कज्ञानवतां शुष्कज्ञानिनाम् । संगम् । संत्याजयितुम् । तथा । तेषां स्वभक्तानाम् । धर्मस्य । स्वभक्तैश्च । सिद्धये ॥ २१४ ॥

पत्रीमलेखयत्स्वामी यो हरिस्तान्प्रति स्वयम्।
स्वभक्तिं धर्मसहितां दद्यान्मे स दयानिधिः ॥ २१५ ॥

पत्रीमिति । स्वामी सर्वाधिपतिः । यः । स्वयं सर्वावतारहेतुः । हरिः । तान्स्वभक्तान्प्रति । पत्रीं कायवाङ्मनोभिः कुसंगं हित्वा स्वस्वधर्मसहितसाध्वीवद् भक्तिः स्वेष्टदेवे साक्षाद्भगवति मयि कार्येतद्विधकाकुदम् । अलेखयच्छुकानंदमुनिना लेखयामास । दयानिधिः । स स्वयं श्रीहरिः । धर्मसहिताम् । स्वभक्तिम् । मे मह्यम् । दद्यात् ॥ २१५ ॥

समाधिमत आत्मीयभक्तस्य ज्ञानमंजसा।
वर्द्धते न बलं वृद्धिं प्राप्नोत्यैन्द्रियकं यथा ॥ २१६ ॥

समाधिमतः । आत्मीयभक्तस्य स्वाश्रितस्य । ज्ञानम् । यथा । अंजसा ब्रह्मपरब्रह्मसंबंधादनायासेन । वर्द्धते वृद्धिं प्राप्नोति । ऐन्द्रियकमिंद्रियकर्म इंद्रियसंबंधि । बलं च यथा वृद्धिम् । न । प्राप्नोति । इन्द्रियबलं केवलसमाधिना वृद्धिं नाप्नोति किंतु तपोवैराग्यनिष्कामधर्मयोगैस्तद्वृद्धिं प्राप्नोतीत्यर्थः ॥ २१६ ॥

तथा प्रश्नोत्तरमुखेनाह यः श्रीहरिर्निजाम्।
स मे दद्यात्स्वपादाब्जसेवामेकांतिकप्रियाम् ॥ २१७ ॥

तथेति । तथा यथा ज्ञानमिंद्रियबलं च वर्द्धते न वर्द्धते तथेत्यर्थः । प्रश्नोत्तरमुखेन । यः । निजान्स्वाश्रितान् । आह । सः । श्रीहरिः । मे मह्यम् । एकांतिकानां स्वैकांतभक्तानां प्रियां वल्लभाम् । स्वपादाब्जसेवाम् । दद्यात् ॥ २१७ ॥

साक्षात्स्वस्य स्वकीयानां सतां माहात्म्यवेदनम्।
परोक्षवत्कारणं यच्छ्रेयसः परमस्य हि ॥ २१८ ॥

साक्षादिति । साक्षात् । स्वस्य । स्वकीयानाम् । सतामेकांतभक्तानां च । परोक्षवत्परोक्षस्वस्वकीयवत् । यत् । माहात्म्यवेदनम् । हि तदेव । परमस्य सर्वोत्तमस्य । श्रेयसः कल्याणस्य । कारणं हेतुरस्ति ॥ २१८ ॥

स्वाप्नसृष्टादिहेतुत्वं जीवेशानं यदात्मनः ।
देशादीनां च मुख्यत्वं स्वस्य यत्सर्वतोऽधिकम् ।। २१९ ।।

स्वाप्नेति । यच्च । आत्मनः स्वस्य । जीवेशानां जीवानामीश्वराणां च स्वाप्नसृष्ट्यादिहेतुत्वम् । जीवेश्वरस्वप्नभवसृष्टेस्तस्मिंस्तद्भुक्तभोगादेश्च स्वस्यैव कारणत्वमस्ति तत्तत्कर्मानुसारेण तेषां तद्दर्शकः स्वयमेवास्तीत्यर्थः । यच्च । देशादीनां देशकालक्रियासंगादीनाम् । मुख्यत्वमस्ति । यच्च । सर्वतः सर्वेभ्यः । अधिकम् । स्वस्य मुख्यत्वमस्ति ॥ २१९ ॥

याथार्थ्यतस्तु तत्सर्वं श्रीहरिः प्राह यो निजान् ।
माहात्म्येन सहितां स्वभक्तिं मे ददातु सः ।। २२० ।।

याथार्थ्यत इति । तत् । सर्वं समग्रम् । याथार्थ्यतः । यः । श्रीहरिः । निजान्स्वभक्तान् प्राह । स श्रीहरिः । मे मह्यम् । माहात्म्येन सहिताम् । स्वभक्तिम् । ददातु ॥ २२० ॥

शूरांश्च शिथिलान्स्वस्य भक्तान् लक्षणतस्तु यः ।
स्ववृत्तांतोक्तितः प्राह कुर्याच्छूरं हरिः स माम् ।। २२१ ।।

शूरानिति । यः । स्ववृत्तांतोक्तितः स्वयं यन्नृनाट्यं कृतं तदुक्त्या । शूरान् । शिथिलांश्च । स्वस्य । भक्तान् । लक्षणतः पृथक् पृथक् लक्षणैः । प्राह । तथा शूरस्वैकांतिकभक्तेभ्यः स्वब्रह्मधाम्नि यत्स्वैश्वर्यं ददाति तदपि सविस्तरं प्राहेति तुशब्दो ज्ञापयति । सः । हरिः । माम् । शूरं शूरवीरस्वैकांतिकभक्तम् । कुर्यात् ॥ २२१ ॥

दुःखदान्सुखदानर्थान् मायिकान्प्राप्य मानसम् ।
न स्याद्येषां दुःखिसुखि सदास्वस्मिन्रतं भवेत् ।। २२२ ।।
एतदेव स्वकीयानां साधूनां येन लक्षणम् ।
प्रोक्तं श्रीहरिणा मह्यं तत्सल्लक्ष्म ददातु सः ।। २२३ ।।

दुःखदानिति । एतदिति । येषाम् । स्वकीयानाम् । साधूनां सज्जनानाम् । मानसं मनः । दुःखदान् सुखदांश्च । मायिकान् । अर्थान्विषयान् । प्राप्य । दुःखि । सुखि च । न । स्यात् । किंतु । सदा । स्वस्मिन् । रतं प्रीतियुक्तम् । भवेत् एतदेव । येन । श्रीहरिणा तेषां स्वकीयसाधूनाम् । लक्षणम् । प्रोक्तं स श्रीहरिः । मह्यम् । तत्स्वोक्तम् । सतां सज्जनानां यल्लक्ष्म लक्षणं तत् । ददातु इति ॥ २२२-२२३ ॥

येषां स्वभक्तौ विक्षेपः स्वभक्तानां तु विघ्नकृत् ।
न भवेत्स च येषां स्याद्देशादेर्विषमत्वतः ।। २२४ ।।

येषामिति । येषाम् । स्वभक्तानां तु । देशादेर्विषमत्वतो देशकालक्रियासंगादीनां वैषम्येण । स्वभक्तौ । विघ्नकृत् । विक्षेपः । न भवेत्सांख्यज्ञानबलाधिक्यान्न स्यात् । येषां स्वभक्तानां च । स स्वभक्तौ विघ्नकृद्विक्षेपः । स्यात्सांख्यज्ञानरहितकेवलयोगनिष्ठत्वाद्देशादिवैषम्ये सति भवेदेव ॥ २२४ ॥

उभयेषां लक्षणानि तेषामुक्तानि येन तु ।
हरिणा स्वस्य भक्तिं मे निर्विघ्नां प्रददातु सः ॥ २२५ ॥

उभयेषामिति । उभयेषां द्विषां द्विविधानाम् । तेषां स्वभक्तानाम् । लक्षणानि । येन । श्रीहरिणा । उक्तानि स श्रीहरिः । मे मह्यम् । निर्विघ्नाम् । उभयोः सांख्ययोगयोः परिपक्वतात्मिकामित्यर्थः । स्वस्य । भक्तिम् । प्रददातु ॥ २२५ ॥

सवासनावासनयोर्गतिरुक्ता स्वभक्तयोः ।
द्विविधा येन संप्रोक्तं वासनात्यागसाधनम् ॥ २२६ ॥

सवासनेति । येन । वासनया मायिकविषयभोगासक्त्या सहितः सवासनः न विद्यते वासना यस्य सोऽवासनः स च स च तौ तयोः । स्वभक्तयोः द्विविधा । गतिः । उक्ता । वासनाया यस्त्यागस्तस्य साधनं च । संप्रोक्तम् ॥ २२६ ॥

स्वस्य चातिप्रसन्नत्वोपायो येनोदितस्तथा ।
स ददातु हरिर्मह्यं सेवां स्वैकांतिनां सताम् ॥ २२७ ॥

स्वस्येति । तथा । येन । स्वस्य । अतिप्रसन्नत्वोपाय उदितो भूरिप्रसन्नतायाः साधनं चोदीरितम् । सः । हरिः । मह्यम् । स्वैकांतिनां स्वानन्यनिष्ठानाम् । सतां भक्तानाम् । सेवाम् । ददातु ॥ २२७ ॥

शिक्षावाक्यामृतैः स्वीयैर्नंदयामास यो निजान् ।
ममानंदप्रदः सोऽस्तु श्रीहरिर्भक्तिधर्मजः ॥ २२८ ॥

शिक्षेति । यः स्वीयैः । शिक्षावाक्यामृतैः । भगवद्भक्तेन भगवत्तद्भक्तप्रियं सदा कार्यं तदप्रियं तु न कार्यं भक्त्यंतरायकृत्स्वसंबंधिजनोऽपि तादृशस्वस्वभावश्चापि त्याज्यो भगवद्विमुखानां पक्षो न कार्यो भक्त्यंतरायकृदात्मज्ञानवैराग्यधर्मादिगुणानपि गौणं कृत्वा भक्तेः मुख्यता कार्या । भगवद्भक्तानां गुण एव ग्राह्यो नागुणो यस्तद्दोषदृक्स्वसत्संगयप्यर्द्धविमुखो मतस्तथाविधस्तु स उच्चपदव्याः पतेद्यः स्वस्यागुणदृगन्यभगवद्भक्तगुणग्राही तस्य भक्तिर्वर्द्धते तद्विपरीतस्तु बुद्धिमानप्यंते विमुखो भविष्यति । गुर्वाद्यनुवृत्तिस्थ एव शिक्षकाणां तेषां प्रियो नान्य इत्यादिहितवागमृतैरित्यर्थः । निजान्स्वभक्तान् । नंदयामासात्यानंदयत् । भक्तिधर्मजः । सः । श्रीहरिः मम । आनंदप्रदः । अस्तु ॥ २२८ ॥

मुक्तानंदमुनेरुक्त्वा सद्वृत्तिं यः समब्रवीत् ।
क्रोधत्यागादिकं स्वीयमभिप्रायमलौकिकम् ॥ २२९ ॥
स्वभक्तैर्धर्मयुक्तायाः स्वभक्तेषु प्रवृत्तये ।
स मह्यं श्रीहरिर्दद्याद् भक्तिमेकांतिकीं स्वकाम् ॥ २३० ॥

मुक्तानंदमुनेरिति । स्वभक्तेरिति । यः मुक्तानंदमुनेः । सद्वृत्तिम् । उक्त्वा प्रश्नोत्तरमुखेन गदित्वा । स्वभक्तेषु । धर्मयुक्तायाः । स्वभक्तैः । प्रवृत्तये । क्रोधत्यागादिकम् । स्वीयम् । अलौकिकम् । अभिप्रायम् । समब्रवीत् । सः । श्रीहरिः । मह्यम् । स्वकाम् । एकांतिकीम् । भक्तिम् । दद्यात् । इति ॥ २२९–२३० ॥

येन स्वभक्तिशिक्षार्थं स्वस्वभावो ह्यलौकिकः ।
प्रोक्तः श्रीहरिणा दद्यात्स मे तदनुवर्त्तनम् ॥ २३१ ॥

येनेति । येन । श्रीहरिणा । स्वभक्तशिक्षार्थम् । अलौकिको हि लोकोत्तर एव । स्वस्वभावः श्रीवासुदेवमाहात्म्यग्रंथातिप्रियत्वं शरणागतवत्सलत्वं स्वभक्तद्रोहिण्यत्यप्रियत्वं तद्गुणावक्तरि च तथात्वं सद्गुणयुक्स्वानन्यभक्तभक्तत्वं तत्सेवायां रुचित्वं स्वभक्तसाधुप्रीणनात्मकस्वनिश्चयत्वादिस्वानन्यसाधारणस्वभाव इत्यर्थः । प्रोक्तः । स श्रीहरिः । मे मह्यम् । तदनुवर्त्तनं तस्य स्वभावस्यानुसारेण वर्त्तनम् । दद्यात् ॥ २३१ ॥

भृशासक्तात्मनः स्वस्मिन् लक्ष्म स्वीयस्य यो हरिः ।
प्रोचे ससाधनं तस्मिन्नत्यासक्तं मनोऽस्तु मे ॥ २३२ ॥

भृशेति । यः । हरिः । स्वस्मिन् । भृशासक्त आत्मा मनो यस्य तस्य । स्वीयस्य स्वभक्तस्य । लक्ष्म लक्षणम् । ससाधनं बलिष्ठप्राक्संस्कारस्वसेवितसाधुप्रसन्नतारूपोपायसहितम् । प्रोचे । तस्मिन् श्रीहरौ । मे । मनः । अत्यासक्तम् । अस्तु ॥ २३२ ॥

स्वभक्तानां साधनं तु मुक्तेः स्त्रीस्वर्णवंधनात् ।
उक्तं येन हरिः सोऽस्तु मम तद्वंधमोक्षदः ॥ २३३ ॥

स्वेति । येन । स्वभक्तानाम् । स्त्री च स्वर्णं च ते एव यद्वंधनं तस्मात् । मुक्तेर्मुक्तभवनस्य । साधनम् । उक्तम् । सः । हरिः । मम । तयोर्वंधाद्वंधनान्मोक्षं ददातीति तथोक्तः । अस्तु ॥ २३३ ॥

भेदोऽनादिश्च मायेशजीवानां चाऽस्ति वास्तवः ।
पुरुषाणां स्वस्य सर्वकारणस्य परस्परम् ॥ २३४ ॥

भेद इति । माया च ईशा ईश्वराश्च तेषाम् । पुरुषाणां क्षरात्मकपुंसाम् । सर्वकारणस्य । स्वस्य श्रीपुरुषोत्तमस्य च । परस्परम् । वास्तवः सत्यः । अनादिर्नित्यश्च । भेदः पृथक्त्वम् । अस्ति । य इति शेषः । यो भेदोऽस्ति स इत्युत्तरश्लोकेन संबंधः ॥ २३४ ॥

येन श्रीहरिणा प्रोक्तोऽनेकसद्युक्तितः स्फुटम् ।
तस्मिन्नेकांतिकी भक्तिः सर्वदा मेऽस्तु सर्वथा ॥ २३५ ॥

येनेति । येन । श्रीहरिणा । अनेकाः याः सद्युक्तयस्ताभिः । स्फुटं यथा तथा । प्रोक्तः । तस्मिन् श्रीहरौ । मे । सर्वदा । एकांतिकी । भक्तिः । सर्वथा कायवाङ्मनोभिः अस्तु ॥ २३५ ॥

वंधुस्नेहत्यागपूर्वं स्वस्मिन्नेकांतिकीं हरिः ।
कार्यां भक्तिं य ऊचे स्वैः तामेव प्रददातु मे ॥ २३६ ॥

वंध्विति । यः । हरिः । स्वैः स्वभक्तैः । वंधुषु स्वदेहसंबंधिषु यः स्नेहस्तस्यात्मनिष्ठादिसाधनैस्त्यागपूर्वं यथा तथा । स्वस्मिन् । कार्याम् । एकांतिकीम् । भक्तिम् । ऊचे । स श्रीहरिः । मे मह्यम् । तां धर्माद्यंगसहितां भक्तिमेव । प्रददातु ॥ २३६ ॥

उक्त्वा स्वभक्तशिक्षार्थं स्वाभिप्रायं व्रतस्य तु ।
ब्रह्मचर्यस्य मुख्यत्वं तस्य स्वप्रियतां तथा ॥ २३७ ॥

उक्त्वेति । स्वभक्तशिक्षार्थम् । स्वस्य योऽभिप्रायस्तम् । उक्त्वा । ब्रह्मचर्यस्यैतदाख्यस्य । मुख्यत्वं सर्वसाधनानां मूलत्वम् । तथा । तस्य व्रतस्य । स्वप्रियताम् । अखंडितैतद्व्रतवति स्वभक्तैस्स्वतिप्रियत्वमित्यर्थः ॥ २३७ ॥

दृढीकारे साधनानि तस्य स्वेषां च यो हरिः ।
स्वेभ्यः प्रोवाच तद्दार्ढ्यं सर्वथा मे ददातु सः ॥ २३८ ॥

दृढीकार इति । स्वेषां स्वाश्रितानाम् । तस्य व्रतस्य । दृढीकारे यथा कदाचिन्न च्यवते तथाऽतिनिश्चलकरणे । साधनानि च । यः । हरिः । स्वेभ्यस्त्यागिगृहिस्वभक्तेभ्यः । प्रोवाच । स श्रीहरिः मे मह्यम् । सर्वथा साधनसहितम् । तस्य ब्रह्मव्रतस्य दार्ढ्यं दृढत्वम् । ददातु ॥ २३८ ॥

महापुरुषरूपेण प्रधानपुरुषात्मना ।
तत्त्वद्वारा च नैकांडसर्गस्थित्यादिकारणम् ॥ २३९ ॥

महापुरुषेति । महापुरुषरूपेण । प्रधानपुरुषात्मना । तत्त्वद्वारा च । स्वेच्छया महापुरुषेक्षितमहामायोत्पन्नप्रकृतिपुंद्वारोत्पन्नमहदादितत्त्वद्वारेत्यर्थः । नैकांडानां समग्रब्रह्मांडानां ये सर्गस्थित्यादयः सृष्टिस्थेमलयास्तेषां कारणं परमहेतुम् ॥ २३९ ॥

कार्यकारणभावेन द्विधा तत्त्वानि यो हरिः ।
जडचिद्रूपतः प्राह स्वेभ्यः सोऽस्त्वेव मद्धृदि ॥ २४० ॥

कार्येति । यः । हरिः । स्वेभ्यः । कार्यकारणभावेन । जडचिद्रूपतश्चिज्जडस्वरूपेण च । तत्त्वानि महदहंकारादीनि । द्विधा द्वाभ्यां प्रकाराभ्याम् । प्राह । स एव श्रीहरिः । मद्धृदि । अस्तु ॥ २४० ॥

स्वस्वधर्मयुजं भक्तिं स्वैः कार्यां सर्वथा हरिः ।
यः प्राह मोक्षदां मह्यं तां दद्यात्सर्वदैव सः ॥ २४१ ॥

स्वस्येति । यः । हरिः । स्वैः स्वाश्रितैः । सर्वथा कायवाङ्मनोभिः । कार्याम् । धर्मयुजं स्वस्वधर्माढ्याम् । स्वस्य । भक्तिं प्रत्यक्षोपासनसहितनवधा भजनम् । प्राह । सः श्रीहरिः । मह्यम् । सर्वदा । मोक्षदाम् । तां स्वधर्मोपासनादिसहितां स्वभक्तिमेव । दद्यात् ॥ २४१ ॥

स्वभक्तानां मनोवृत्तेः स्वस्मिन्स्थैर्याय यो हरिः ।
उपायांश्चतुरः प्राह तान्दद्यान्मे स तत्कृते ॥ २४२ ॥

स्वेति । यः । हरिः । स्वस्मिन् । स्वभक्तानाम् । मनोवृत्तेः । स्थैर्यायाखंडस्थिरतायै चतुरश्चित्तस्निग्धताशौर्यभयवैराग्येति चतुःसंख्यान् । उपायान् । प्राह । स श्रीहरिः । मे मह्यम् । तत्कृते स्वस्मिन्मन्मनोवृत्तिस्थिरतायै । तानुपायान् । दद्यात् ॥ २४२ ॥

स्वाभाविक्याः स्वभक्तानां प्रकृतेः संनिवर्तने ।
येनोक्तो हरिणोपायस्तं मे दद्यात्स सर्वथा ॥ २४३ ॥

स्वाभाविक्या इति। येन। श्रीहरिणा। स्वभक्तानाम्। स्वाभाविक्याः। प्रकृतेः स्वभावस्य। संनिवर्तने। उपायः प्रकृतिविनाशकोपदेष्टरि दृढविश्वासप्रीतितद्वचनावधारणात्मकोपायः। उक्तः। स श्रीहरिः। मे मह्यम्। सर्वथा। तमुपायम्। दद्यात् ॥ २४३ ॥

स्वस्यैकांतिकभक्तानां लक्षणं यत्प्रवेशनम्।
तेषामेव भवेत्स्वस्मिन् लक्षणं तस्य च स्फुटम् ॥ २४४ ॥

स्वस्येति। स्वस्य एकांतिकभक्तानाम्। लक्षणम्। तेषां स्वैकांतिकभक्तानामेव। स्वस्मिन्। यत्। प्रवेशनम्। भवेत्। तस्य च। लक्षणम्। स्फुटं यथा तथा ॥ २४४ ॥

यः श्रीहरिः स्वभक्तेभ्यः प्रोवाच करुणानिधिः।
कृत्वा मैकांतिकं स्वस्मिन्प्रवेशं तं ददातु सः ॥ २४५ ॥

य इति। करुणानिधिः। यः। श्रीहरिः। स्वभक्तेभ्यः। प्रोवाच। अभक्तास्तु मंत्रादिज्ञे धनादिप्रदे च विश्वसन्ति अभक्तास्तु तस्मिन्नणुमपि न विश्वसंतीत्युक्तिपूर्वं खट्वांगोपमया स्वैकांतभक्तलक्षणमाहातिकामिनः स्त्रियामतिलुब्धस्य धने वार्द्धकाप्तैकपुत्रस्य तत्र पुत्रे च यथा प्रवेशस्तथा प्रवेशस्तेषां मयीति लक्षणं चाहेत्यर्थः। स श्रीहरिः। मा माम्। एकांतिकं भक्तम्। कृत्वा। स्वस्मिन्। तं स्वोक्तविधम्। प्रवेशम्। ददातु ॥ १४५ ॥

स्वभक्तानां तु शिक्षार्थमुक्त्वा स्वांश्चतुरो गुणान्।
अभिप्रायं च दशमपंचमस्कंधयोः स्फुटम् ॥ २४६ ॥

स्वेति। स्वभक्तानाम्। शिक्षार्थम्। स्वान्स्वकीयान् चतुरश्चतुःसंख्यान्। गुणान्। सदैव रमणीयविषयेष्वरुचिः सर्वक्रियासु सदाऽऽत्मदर्शनं दिव्यसदासाकारत्वेन ब्रह्मधाम्नि स्थितः स्वयं भगवानेव सर्वकर्त्ताऽस्तीति दृढनिश्चयो दंभयुक्तभक्तेश्च रुचिरदंभिसत्यभक्तेषु रुचिश्चैतत्स्वगुणान्। उक्त्वा। स्फुटं यथा तथा। दशमपंचमस्कधयोः श्रीमद्भागवतैतत्स्कंधयोः। अभिप्रायं रहस्यम् ॥ २४६ ॥

श्रीहरिः प्राह यः स्वस्य सदा साकृतितां तथा।
भक्तिधर्मात्मजो मह्यं स दद्यात्स्वप्रियान् गुणान् ॥ २४७ ॥

श्रीति। तथा। सदा। स्वस्य। साकृतितां दिव्यसाकारतां च। यः। श्रीहरिः। प्राह भक्तिधर्मात्मजः। स श्रीहरिः। मह्यम्। स्वप्रियान्। गुणान्स्वोक्तचतुर्गुणान्। दद्यात् २४७॥

स्वाचारेण स्वभक्तानामपराधनिवृत्तये।
नित्यमेकोऽधिकः कार्यः प्रणामो दंडवत्त्विति ॥ २४८ ॥

स्वाचारेणेति। स्वस्य यदाचरणं तेन। स्वभक्तानाम् अपराधनिवृत्तये। नित्यम्। एकः। अधिको नित्यकर्त्तव्याद्विशेषः। दंडवत्। प्रणामः। कार्यः। इत्येवम् ॥ २४८ ॥

अशिक्षयत्स्वभक्तान् यः श्रीहरिः करुणार्णवः।
स मामवतु सततं स्वभक्तस्यापराधतः ॥ २४९ ॥

अशिक्षयदिति। करुणाया अर्णवः समुद्ररूपः। यः। श्रीहरिः। स्वभक्तान्। अशिक्षयत्। स श्रीहरिः। माम्। स्वभक्तस्य। अपराधतः सकाशात्। सततम् अवतु रक्षतु २४९॥

स्वस्य च स्वसतां सेवारीतिर्येन प्रदर्शिता।
स्वीयेभ्यः स हरिर्दद्यात्तत्सेवां मे तथाविधाम् ॥ २५० ॥

स्वस्येति। येन। स्वस्य। स्वसतां च। सेवारीतिः। मानस्यातिदुष्टतायास्तद्धीनानां दुर्लभतायाश्च प्रदर्शनपूर्वकं मानं हित्वा प्रीतिसहितसेवाविधानप्रकार इत्यर्थः। स्वीयेभ्यः। प्रदर्शिता। सः। हरिः। मे मह्यम्। तथाविधां स्वोक्तप्रकाराम्। तेषां स्वस्वकीयानां सेवाम्। दद्यात् ॥ २५० ॥

यथा स्वस्यैकैकरोम्णि संति नैकांडकोटयः।
यथा तत्र स्वयं नैकैः स्वरूपैरस्त्यवस्थितः ॥ २५१ ॥

यथेति। यथा। स्वस्य। एकैकरोम्णि। नैकांडकोटयोऽसंख्यब्रह्मांडानि। संति। यथाः च। तत्र तेष्वंडेषु। स्वयम्। नैकैरगणितैः। स्वरूपैः। अवस्थितः। अस्ति ॥ २५१ ॥

तथैव श्रीहरिः स्वेभ्यो भक्तेभ्यो योऽब्रवीत्प्रभुः।
ममेप्सितं स्वभक्तस्य संपूर्णं विदधातु सः ॥ २५२ ॥

तथेति। तथैव। स्वेभ्यः भक्तेभ्यः। प्रभुः सकलावतारव्यूहमूर्त्यादिधारणसमर्थः। यः। श्रीहरिः। अब्रवीत्। स श्रीहरिः। स्वभक्तस्य। मम। ईप्सितं मनोरथम्। संपूर्णम्। विदधातु ॥ २५२ ॥

स्वभक्तस्य गुणातीतस्थितेः स्वस्मिन् यथाविधा।
प्रीतिः स्यात्तां य ऊचेऽसौ श्रीहरिस्तां ददातु मे ॥ २५३ ॥

स्वेति। यः। गुणातीतस्थितेर्मायिकतमोरजःसत्त्वगुणानतिक्रम्य वर्त्तमानस्य। स्वभक्तस्य। स्वस्मिन्। यथाविधा यादृशी। प्रीतिः स्यात्। तां तथाविधां प्रीतिम्। ऊचे। असौ सः। श्रीहरिः। मे मह्यम्। तां स्वस्मिंस्तादृशीं प्रीतिम्। ददातु ॥ २५३ ॥

वर्ज्यसंगान्कार्यसंगान् लक्षणैराह यो हरिः।
आद्यसंगं न मे दद्याद्न्यसंगं ददातु सः ॥ २५४ ॥

वर्ज्येति। यः। हरिः। वर्ज्यो दूरतस्त्यजनीयः संगो येषामासुरीसंपदाढ्यानां भगवत्तद्भक्तगुणेषु दोषदर्शिनां तेषां द्रोहकारिणां दंभिनां च तान्। कार्यः संगो येषां दैवीसंपदाढ्यानां श्रीहरिप्रियाणां श्रीहरितद्भक्तक्रियासु गुणदर्शनान् च तांश्च। लक्षणैः। आह। स श्रीहरिः। मे मह्यम्। आद्याः प्रथमोक्ता ये आसुरीसंपदाढ्यास्तेषां संगं कायवाङ्मनोभिः कमपि संबंधम्। न। दद्यात्। अन्येऽनंतरं प्रोक्ता ये दैवीसंपदाढ्यास्तेषां संगं नित्यसहवासादिप्रसंगम्। ददातु ॥ २५४ ॥

साध्वादिस्वाश्रितजनशिक्षावाक्यानि येन तु।
हरिणोक्तानि च स्वस्य स्वसतां कर्म रोचकम् ॥ २५५ ॥

साध्विति। येन श्रीहरिणा। साध्वादयः परमहंसवर्णिधर्मवंश्यसद्गृहिणो ये स्वाश्रितजना निजाश्रितस्त्रीपुरुषास्तेषां तद्धिताय शिक्षावाक्यानि। उक्तानि। स्वस्य। स्वसतां च। रोचकं प्रीतिकरम्। कर्म ॥ २५५ ॥

अरोचकं च यत्कर्म फलमुक्तं तयोर्द्विधा ।
स्वशिक्षापालकं कुर्यात्सर्वथैव सदा स माम् ॥ २५६ ॥

अरोचकमिति । यच्च । अरोचकं स्वस्वकीयानामप्रीतिकरम् । कर्म द्विधा द्विप्रकारम् । तयो रोचकारोचककर्मणोः । फलं च । उक्तम् । स श्रीहरिः । सदा । माम् । सर्वथा । स्वशिक्षापालकं स्वेन भक्तहिताय कृतोपदेशानुसारेण वर्त्तिनमेव । कुर्यात् ॥ २५६ ॥

स्वस्यैकांतिकभक्तानां लक्षणं श्रेष्ठता तथा ।
स्वस्यैकांतिकधर्मस्य प्रियताऽतिशयेन च ॥ २५७ ॥

स्वस्येति । स्वस्य । एकांतिकभक्तानाम् । लक्षणमेकांतिकधर्माच्च्युतिरेव मरणं न देहेन तदित्यादिवेदनप्रभृतिलक्ष्म । तथा । श्रेष्ठता तेषां श्रेष्ठत्वं च । स्वस्य । अतिशयेन सर्वाधिकतया । एकांतिकधर्मस्य । प्रियता प्रेष्ठत्वं च । तल्लक्षणस्थापनप्रवर्त्तनार्थमनुयुगमिह स्वस्य नृनाट्यप्रदर्शनत्वादिति भावः ॥ २५७ ॥

ततः पतनहेतुश्च तत्फलं चातिदुःखदम् ।
उक्तं श्रीहरिणा येन स तं धर्मं ममावतु ॥ २५८ ॥

तत इति । ततस्तस्मादेकांतिकधर्मात् । पतनस्य हेतुर्भगवत्तद्भक्तदोषधीरूपकारणं च । अतिदुःखदम् । तेषामेकांतिकधर्मात्पतितानां फलं सर्वयक्षराक्षसयोनिप्राप्तिरूपपरिपाकदशा च । येन । श्रीहरिणा । उक्तमेतत्सर्वं गदितम् । स श्रीहरिः । मम । तं स्वातिप्रियैकांतिकम् । धर्मम् । अवतु परिपातु ॥ २५८ ॥

स्वसाधूनां मायिकार्थवासनात्यागशिक्षणम् ।
सहेतुकं च सोपायं येन श्रीहरिणा कृतम् ॥ २५९ ॥

स्वसाधूनामिति । येन । श्रीहरिणा । सहेतुकं हेतुसहितम् । सोपायमुपायसहितं च । स्वसाधूनां स्वाश्रितपरमहंसवर्णिपदातीनाम् । मायिका येऽर्था विषयास्तेषां वासनायाः त्यागस्य यच्छिक्षणं हितोपदेशस्तत् । कृतम् ॥ २५९ ॥

स्वभक्तानां स परमहितकारी दयार्णवः ।
हरतान्ममहृत्स्थास्ताः सर्वथैवाशु वासनाः ॥ २६० ॥

स्वभक्तानामिति । दयार्णवः । अत एव । स्वभक्तानाम् । परमहितकारी । स श्रीहरिः । सर्वथा । मम । हृत्स्था हृदयस्थिताः । ताः प्राकृतविषयसंबंधिनीः । वासनाः । आशु शीघ्रमेव । हरताद्विनाशयतु ॥ २६० ॥

स्मरतामनिशं स्वेषां स्वमूर्त्तिमहिमाऽधिकः ।
दर्शितो येन हरिणा स स्यान्मद्धृदि सर्वदा ॥ २६१ ॥

स्मरतामिति । येन । हरिणा । अनिशं सततम् । स्वमूर्त्तिम् । स्मरताम् । स्वेषां स्वाश्रितानाम् । अधिकः । महिमा । दर्शितः प्रेमानंदमुनिगीतस्वमूर्त्तिध्यानपद्यानि श्रुत्वा प्रसन्नीभूय सम्यग्वर्णित इत्यर्थः । स श्रीहरिः । सर्वदा । मद्धृदि । स्यात् । अखंडमूर्त्तिचिंतनं मद्धृदि भवेदित्यर्थः ॥ २६१ ॥

अमायिकां स्वमूर्त्तिं च स्मरतां मायिकाकृतीः ।
येनोक्तः फलभेदः श्रीहरिः सोऽस्तु मदंतरे ॥ २६२ ॥

अमायिकामिति । येन । अमायिकां नृभावत्वेन दर्शितेऽपि सदादिव्याम् । स्वमूर्त्तिम् । स्मरताम् । मायिकाकृतीः प्राकृताकारान् । स्मरतां च जनानाम् । फलभेदः । उक्तः । आद्यानां भवाब्धिमुच्य ब्रह्मधामप्राप्तिरूपाऽन्येषां घोरनिरयसंसृतिरूपा च फलतारतम्यता प्रोक्तेत्यर्थः । सः । श्रीहरिः । मम यदंतरमंतःकरणं तस्मिन् । अस्तु सदा निवासं करोतु ॥ २६२ ॥

शिक्षणार्थं स्वभक्तानां स्वरहस्यं य ऊचिवान् ।
श्रीहरिर्मे स दद्यात्तदनुवर्त्तनमन्वहम् ॥ २६३ ॥

शिक्षणार्थमिति । यः । स्वभक्तानाम् । शिक्षणार्थम् । स्वरहस्यमक्षरब्रह्मणा तादात्म्यं प्राप्य तन्मध्यस्थश्रीहरावेव दृढप्रीतितदन्यत्र मायिकविषयारुचित्वादिस्वसिद्धांतम् । ऊचिवान् सः । श्रीहरिः मे मह्यम् । अन्वहम् । तदनुवर्त्तनं स्वरहस्यानुसरणम् । दद्यात् ॥ २६३ ॥

सद्रूपेण स्थितेर्लक्ष्म स्वधर्मस्थितिमाह यः ।
स्वीयानां स हरिर्मह्यं तां ददातु स्थितिं दृढाम् ॥ २६४ ॥

सद्रूपेणेति । यः । स्वीयानां स्वभक्तानाम् । स्वधर्मस्थितिं स्वस्वधर्मरूपभगवद्धर्ममर्यादायां वर्त्तनमेव । सद्रूपेण स्वात्मनो ब्रह्मणैकभावेन । स्थितेर्वर्त्तनस्य । लक्षणम् । आह । सः । हरिः । मह्यम् । दृढाम् । तां ब्रह्मरूपेणावस्थानात्मिकाम् । स्थितिम् । ददातु ॥२६४ ॥

स्वभक्तत्यागिगृहिणां परस्परविरुद्धता ।
धर्माणां स्वप्रसन्नत्वं स्वधर्मैः श्रद्धया तथा ॥ २६५ ॥

स्वभक्तेति । स्वस्य भक्ता ये त्यागिनश्च गृहिणश्च तेषाम् । धर्माणाम् । परस्परविरुद्धता । स्वधर्मैः स्वस्वधर्मे वर्त्तनैरित्यर्थः । तथा । श्रद्धया च । स्वप्रसन्नत्वम् ॥ २६५ ॥

अनीर्ष्यया च तत्प्रोक्तं येन श्रीहरिणा स मे ।
स्वधर्मदृढतां श्रद्धामनीर्ष्यां प्रददातु च ॥ २६६ ॥

अनीर्ष्ययेति । अनीर्ष्यया श्रद्धया स्वसेवाकर्तृष्वनीर्ष्यया च । तत्स्वप्रसन्नत्वम् । येन । श्रीहरिणा । प्रोक्तम् । स श्रीहरिः । मे मह्यम् । स्वधर्मे या दृढता ताम् । श्रद्धाम् । अनीर्ष्यां च । प्रददातु ॥ २६६ ॥

यो लक्ष्मोक्त्वा तु मोहस्य साधनं तन्निवर्त्तने ।
हरिः प्राह स्वमाहात्म्यबोधं तं स ददातु मे ॥ २६७ ॥

य इति । यः । मोहस्य । लक्ष्मस्वदोषाननुसंधानभगवत्तद्भक्तदोषदर्शित्वादिलक्षणम् । उक्त्वा । तस्य मोहस्य निवर्त्तने निवृत्तिकरणे । स्वमाहात्म्यबोधं सत्पुरुषसच्छास्त्रनिषेवया ज्ञातस्वमाहात्म्यरूपं साधनम् । प्राह । सः । हरिः । मे मह्यम् । तं मोहनिवृत्तिकृत्स्वमाहात्म्यबोधम् । ददातु ॥ २६७ ॥

यस्य स्वकीयभक्तस्य सत्संगः सर्वतोऽधिकः ।
स्यात्तस्य येन लक्ष्मोक्तं स हरिर्मे ददातु तम् ॥ २६८ ॥

यस्येति । येन । यस्य । स्वकीयभक्तस्य । सर्वतः । अधिकः । सत्संगः । स्यात् । तस्य स्वभक्तस्य । लक्ष्म । उक्तम् । सः । हरिः । मे मह्यम् । तं सत्संगम् । ददातु ॥ २६८ ॥

स्वभक्तशिक्षणार्थं यो दृष्टांतैः स्वमलौकिकम् ।
अंगमूचे स मे दद्याद्धरिस्तदनुवर्त्तनम् ॥ २६९ ॥

स्वभक्तेति । यः । स्वभक्तशिक्षणार्थम् । अलौकिकम् । स्वमंगं स्वस्वाभाविकीस्थितिं दृष्टांतैः । ऊचे । स हरिः । मे मह्यम् । तदनुवर्त्तनं स्वस्वाभाविकीस्थित्यनुसारेण वर्त्तनम् । दद्यात् ॥ २६९ ॥

स्वस्मिन्स्वभक्तैर्यः कार्यां प्रीतिं स्वोद्देशतो हरिः ।
प्राह स्वस्मिन्स मे दद्यात्प्रीतिं प्रीतोऽचलां सदा ॥ २७० ॥

स्वस्मिन्निति । यः । स्वभक्तैः । स्वस्मिन् । कार्याम् । प्रीतिम् । स्वोद्देशतः । प्राह । स हरिः प्रीतः । सन् । मे मह्यम् । सदा स्वस्मिन् । अचलाम् । प्रीतिम् । दद्यात् ॥ २७० ॥

ब्रह्मात्मना स्वभक्तानां त्वस्मिन् प्रीतेर्विधानकम् ।
दर्शितं येन स हरिः स्वस्मिन्मह्यं ददातु ताम् ॥ २७१ ॥

ब्रह्मेति । येन । स्वभक्तानाम् । ब्रह्मात्मना । प्रीतेः विधानकं कर्त्तव्यत्वम् । दर्शितम् । सः । हरिः । मह्यम् । स्वस्मिन् । तां प्रीतिम् । ददातु ॥ २७१ ॥

पुष्टेः स्वसंप्रदायस्य येनोक्तं साधनद्वयम् ।
स श्रीहरिस्तद्द्वयं मे तस्य पुष्ट्यै ददातु वै ॥ २७२ ॥

पुष्टेरिति । येन । स्वसंप्रदायस्य । पुष्टेः । साधनद्वयं स्वसंप्रदायेष्टदेवजन्मचरित्रगुण-माहात्म्यग्रंथसंप्रदायस्थजनसधर्मभक्त्याचरणेतिकारणद्वयम् । उक्तम् । सः । श्रीहरिः । मे मह्यम् । तस्य स्वसंप्रदायस्य । पुष्ट्यै पुष्ट्यर्थम् । तद्द्वयं साधनद्वयम् । वै निश्चितम् । ददातु ॥ २७२ ॥

माहात्म्यसहितं स्वस्मिन् स्वभक्तेषु च साधुषु ।
स्वैः कार्यां प्राह यः प्रीतिं स हरिस्तां ददातु मे ॥ २७३ ॥

माहात्म्येति । यः । स्वस्मिन् । स्वभक्तेषु । साधुषु च । माहात्म्यसहितं यथा तथा । स्वैः स्वाश्रितैः । कार्याम् । प्रीतिम् । प्राह सः । हरिः । मे मह्यम् । तां स्वस्वसत्सु समाहात्म्यप्रीतिम् । ददातु ॥ २७३ ॥

विक्षेपाबाधसद्धेतुं स्वभक्तौ यो विचारकम् ।
स्वभक्तानां च माहात्म्यं तेषु वर्त्तनरीतिकाम् ॥ २७४ ॥

विक्षेपेति । यः । स्वस्य या भक्तिस्तस्याम् । विक्षेपस्याबाधो यद्विचारेण विक्षेपः पीडाकरो न भवेत्तस्य सन्समीचीनो हेतुर्हेतुभूतस्तम् । विचारकं सद्विचारम् । स्वभक्तानाम् । तेषु स्वभक्तेषु । वर्त्तनरीतिकां वर्त्तनप्रकारं च ॥ २७४ ॥

स्वभक्तान् श्रीहरिः प्राह दयादिगुणसागरः ।
विचारादित्रयं दद्यादेतन्मह्यं सदैव सः ॥ २७५ ॥

स्वेति । स्वभक्तान्प्रति । प्राह । दयादिगुणसागरः । सः । श्रीहरिः । मह्यम् । सदैव । एतत्स्वोक्तम् । विचारादित्रयम् । दद्यात् ॥ २७५ ॥

गुणास्त्रयः स्वभक्तानां दुर्लभाः श्रेष्ठयोः स्वयोः ।
भक्तयोर्गृहिसाध्वोश्च लक्षणं माननीयता ॥ २७६ ॥
प्रतिष्ठितजनस्यात्र प्रोक्तान्येतानि येन तु ।
हरिणा स यथायोग्यं ददात्वेतानि मे प्रभुः ॥ २७७ ॥

गुणा इतिं । प्रतिष्ठितेति । येन । हरिणा । स्वभक्तानाम् । दुर्लभाः । त्रयः स्वस्वनियमभगवन्निश्चयभागवतपक्षपातेतित्रिसंख्याकाः । गुणाः । श्रेष्ठयोः । गृहिसाध्वोर्गृहाश्रमस्थत्यागाश्रमस्थयोः स्वयोः स्वकीययोः । भक्तयोः । लक्षणं च । अत्रास्मिंल्लोके । यथायोग्यम् । प्रतिष्ठितजनस्य । माननीयता सत्कारकर्त्तव्यता च । एतानि त्रीणि । प्रोक्तानि । प्रभुः । स श्रीहरिः । मे मह्यम् । एतानि स्वधर्मादिसर्वाणि । ददातु ॥ २७६–२७७ ॥

अंगत्रयं स्वभक्तैस्तु साध्यं लक्षणतोऽब्रवीत् ।
यो हरिः स ददात्वेतत् त्रयं मह्यं दयानिधिः ॥ २७८ ॥

अंगेति । यः । हरिः । स्वभक्तैः । त्ववश्यम् । साध्यं स्वेषु परिपक्वतया संपादनीयम् । अंगत्रयमात्मनिष्ठापातिव्रत्यदास्येत्यंगत्रिकम् । लक्षणतः । अब्रवीत् । आदौ मम पितामहायोध्याप्रसादरघुवीरयोः प्रश्नयोरुत्तरे कृत्वाऽनंतरमेतदंगत्रयं विविच्य तेष्वेकस्य दृढता त्ववश्यं भक्तैः कार्या तत्रैकतममप्यंगं यस्य न दृढं तेन यत्नतः सत्संगनियमाः सदा पाल्याः । अन्यथा सत्संगात्स भ्रष्टः स्यादथ च तेनेतदंगत्रिकोपेताः सज्जना अनुवृत्त्या सेव्यास्तेन च स कृतार्थो भवेदित्यादिप्राज्यहितोपदेशमकरोदित्यर्थः । एषा टीकाकारोक्तिर्ज्ञेया । दयानिधिः । स श्रीहरिः । मह्यम् । एतत् त्रयमात्मनिष्ठप्रीतिदास्येत्यंगत्रिकम् । ददातु ॥ २७८ ॥

जीवादिज्ञानलक्ष्मोक्ता स्वसतां सेवनस्य तु ।
माहात्म्यं येन हरिणा प्रोक्तं तन्मे ददातु सः ॥ २७९ ॥

जीवेति । येन हरिणा । जीवादीनां जीवेंद्रियांतःकरणानां यज्ज्ञानं पृथक् पृथक्त्ववेदनं तस्य लक्ष्म लक्षणम् । तुशब्दाज्ज्ञानबलसंपादनसाधनं च । स्वस्य सतामेकांतिकभक्तानाम् । सेवनस्य । परिचर्यायाः । माहात्म्यं च । प्रोक्तम् । स श्रीहरिः । मे मह्यम् । तत्स्वेन गदितं सर्वम् । ददातु ॥ २७९ ॥

सर्वावतारधारित्वं सर्वकारणताऽऽत्मनः ।
येनोक्ता श्रीहरिः सोऽस्तु सदैव मम मानसे ॥ २८० ॥

सर्वेति । येन । आत्मनः । स्वस्य । सर्वावतारधारित्वम् । सर्वेषां पुरुषतदुत्पन्नानंतब्रह्मांडाधिपत्यादीनां कारणता च । उक्ता । सः । श्रीहरिः । मम । मानसे । सदैव अस्तु तिष्ठतु ॥ २८० ॥

मोहवर्जनपूर्वं तु स्वस्मिन्नैकांतिको स्वकैः ।
येनोक्ता हरिणा कार्या भक्तिस्तां मे ददातु सः ॥ २८१ ॥

मोहेति । येन । हरिणा । स्वकैः स्वभक्तैः । मोहस्य स्वभक्तकृतसेवां स्वीकर्तुं मनुष्यभावेन वर्त्तमाने स्वस्मिन्स्वसमानतया दोषारोपणरूपाज्ञानस्य वर्जनपूर्वं यथा तथा । स्वस्मिन् । कार्या । एकांतिकी । भक्तिः । उक्ता । स श्रीहरिः । मे मह्यम् । तां स्वोक्तां भक्तिम् । ददातु ॥ २८१ ॥

यः पृष्ट्वा षण्महासाधून् प्रश्नान् कृत्वोत्तराणि तान् ।
हर्षयामास स हरिर्हर्षदोऽस्तु सदा मम ॥ २८२ ॥

य इति । यः । षट् संख्याकान् । महासाधूनानंदानंदमुनिनित्यानंदमुनि ब्रह्मानंदमुनिगोपालानंदमुनिमुक्तानंदमुनिशुकानंदमुनीत्याख्यमहामुनीन् । प्रश्नान् । पृष्ट्वा । उत्तराणि तत्प्रतिवचनानि । कृत्वा । तान्मुनीन्द्रान् । हर्षयामास । सः हरिः । मम । सदा हर्षद आनंदप्रदः । अस्तु ॥ २८२ ॥

स्वेषु ब्रह्मस्वरूपेषु स्वस्मिन् भेदो यथाऽक्षरे ।
स्वपदे येन हरिणा प्रोक्तो ध्येयोऽस्तु मे स वै ॥ २८३ ॥

स्वेष्विति । येन । हरिणा । अक्षरेऽक्षरब्रह्माख्ये । स्वपदे निजधाम्नि । स्वस्मिन् । ब्रह्मस्वरूपेषु । स्वेषु स्वीयैकांतभक्तेषु च । स्वधामस्थस्वस्वकीयेष्वित्यर्थः । यथा यथावत् । भेदः स्वामिसेवकभावः । प्रोक्तः । स वै स एवावतारश्रीपुरुषोत्तमसहजानंदस्वामी । मे । ध्येयोऽखंडब्रह्मात्मना ध्यातुं योग्यः । अस्तु ॥ २८३ ॥

यः स्वाश्रितान्स्ववचनामृतपानतृप्तान्निष्कारणातिकरुणामयमूर्त्तिरीशः ।
चक्रेऽक्षराख्यपदवास उरुश्रवास्तं श्रीभक्तिधर्मतनयं पितरं नमामि ॥२८४॥

इति मध्यमप्रकरणं समाप्तम्

य इति । अक्षराख्यपदे वासस्तदधिपतितया निवासो यस्य सः । उरूणि श्रवांसि यशांसि यस्य सः । निष्कारणा निष्प्रयोजना याऽतिकरुणा तन्मयी मूर्त्तिर्यस्य सः । ईशः सर्वेश्वरः यः । स्वाश्रितान् । स्ववचनामृतपानतृप्तान् । चक्रे । श्रीभक्तिधर्मतनयम् । पितरं मज्जनकम् । तं श्रीहरिकृष्णभगवंतम् । अहम् । नमामि ॥ २८४ ॥

इति श्रीहरिवाक्यसुधासिन्धुमध्यमप्रकरणोक्ततरंगाः समाप्ताः ॥

---

## अथ वृत्तालयोक्ततरंगाः प्रारभ्यन्ते

निर्विकल्पस्थितिमतः स्वभक्तस्य तु लक्षणम् ।
जयार्थोद्यमनं तस्यापकस्य च मनोरिपोः ॥ २८५ ॥

निर्विकल्पेति । निर्विकल्पा स्थितिर्विद्यतेऽस्येति तथोक्तस्य । स्वभक्तस्य । लक्षणम् । अपक्वस्य । तस्य स्वभक्तस्य च । मनोरिपोर्मनोरूपशत्रोः । जयार्थं पराजयार्थमुद्यमनमुद्यमः ॥ २८५ ॥

येन श्रीहरिणा प्रोक्तमेतद् द्वितयमात्मनः ।
भक्तेभ्यः स च मे दद्यान्निर्विकल्पस्थितिं दृढाम् ॥ २८६ ॥

येनेति । एतत् । द्वितयम् । आत्मनः स्वस्य । भक्तेभ्यः । येन । श्रीहरिणा । प्रोक्तम् । स च श्रीहरिः । मे मह्यम् । दृढाम् । निर्विकल्पस्थितिम् । दद्यात् ॥ २८६ ॥

सदा साकृतिताज्ञानं स्वस्य स्वप्रीतिकारणम् ।
वेदादिसारं यः प्राह सोऽव्यात्तन्मे दृढं हरिः ॥ २८७ ॥

सदेति । यः । स्वस्य या प्रीतिस्तस्याः कारणम् । वेदादीनां सारं सारभूतं च । स्वस्य । सदा । साकृतितायाः साकारत्वस्य यज्ज्ञानं तत् । प्राह । सः । हरिः । मे । दृढम् । तत्स्वसाकारस्वरूपज्ञानम् । अव्याद्रक्षतु ॥ २८७ ॥

धर्माद्यंगत्रयावाप्तिहेतोर्लक्ष्म गुणस्य च ।
पराऽपरेति भेदेन द्विविधं भक्तिलक्षणम् ॥ २८८ ॥

धर्मेति । धर्माद्यंगत्रयाणां याऽवाप्तिः प्राप्तिस्तस्या हेतोः । गुणस्य स्वमाहात्म्यज्ञानाढ्यभक्त्याख्यस्य लक्ष्म । परा । अपरा । इति । भेदेन । द्विविधम् । भक्तिलक्षणं च ॥ २८८ ॥

प्राप्तेः स्वस्य पराभक्तेर्हेतूनां स्वसतां च यः ।
लक्ष्माण्याह हरिर्दद्यात्स मे भक्तिपरां स्वकाम् ॥ २८९ ॥

प्राप्तेरिति । स्वस्य । पराभक्तेः । प्राप्तेः । हेतूनाम् । स्वस्य ये संतस्तेषाम् । लक्ष्माणि च । यः । हरिः । आह । स श्रीहरिः । मे मह्यम् । स्वकाम् । भक्तिम् । दद्यात् ॥ २८९ ॥

मुख्यं साधनमुक्त्वा यः स्वभक्तस्य तु योगिनः ।
वृत्तिमाह हरिर्दद्यात्तत्तां मे स दयानिधिः ॥ २९० ॥

मुख्यमिति । यः । हरिः स्वभक्तस्य । मुख्यम् । साधनं साधुलक्षणाख्यं साधुसंगतिलक्षणाख्यम् । उक्त्वा । योगिनः । वृत्तिं स्वध्यानस्थितिम् । आह । दयानिधिः । स श्रीहरिः । मे मह्यम् । साधनम् । तां स्वोक्तयोगिवृत्तिं च । दद्यात् ॥ २९० ॥

कृत्वा चतुर्णां प्रश्नानामुत्तराणि तु यो हरिः ।
स्वभक्तान्नंदयामास स आनंदप्रदोस्तु मे ॥ २९१ ॥

कृत्वेति । यः । हरिः चतुर्णाम् । प्रश्नानां स्वमायातरणप्रकारः स्वप्रपन्नस्य लक्षणं कनिष्ठो यैः साधनैः सद्य उत्तमः स्याच्चेत्यनुयोगानाम् । कृत्वा । स्वभक्तान् । नंदयामासानंदयत् । स श्रीहरिः । मह्यम् । आनंदप्रदः अस्तु ॥ २९१ ॥

स्वातंत्र्यं यो हरिः प्राह स्वेच्छायाः कर्मकालयोः ।
अस्वातंत्र्यं यथावत्स स्वस्मिन् भक्तिं ददातु मे ॥ २९२ ॥

स्वातंत्र्यमिति। यः। हरिः। स्वस्य येच्छा तस्याः। स्वातंत्र्यम्। कर्म च कालश्च तयोः अस्वातंत्र्यं च। यथावत्। प्राह। स श्रीहरिः। मे मह्यम्। स्वस्मिन् भक्तिम्। ददातु ॥ २९२ ॥

यो दैवतात्म्युपायं च स्वान्वयव्यतिरेकयोः।
भेदं प्राह स दद्यान्मे भक्तिं स्वैकांतिकीं हरिः ॥ २९३ ॥

य इति। यः देवतात्म्युपायमासुराणां दैवीसंपदाढ्यभवसाधनम्। स्वस्य योऽन्वयश्च व्यतिरेकश्च तयोः। भेदं च प्राह। सः। मे मह्यम्। स्वैकांतिकीम्। भक्तिम्। दद्यात् २९३॥

स्वभक्तयोगिनो ध्यानाचलस्थितिरुदीरिता।
स्वमूर्त्तौ येन हरिणा तां ददातु स्थितिं स मे ॥ २९४ ॥

स्वभक्तेति। येन। हरिणा। स्वमूर्तौ। स्वस्य भक्तो यो योगी तस्य। ध्यानाचलस्थितिः। उदीरिता। स श्रीहरिः मह्यम्। तां स्वमूर्त्तौ। ध्यानात्मिकाम्। स्थितिम्। ददातु ॥ २९४ ॥

गुणात्मकसुखस्याथ स्वनिर्गुणसुखस्य च।
येनोक्तो भोगभेदो मे हरिर्दद्यात्स तन्निजम् ॥ २९५ ॥

गुणात्मकेति। येन गुणात्मकं मायिकं यत्सुखं तस्य। अथ। स्वस्य यन्निर्गुणसुखं तस्य च भोगभेदः। मायिकं सुखं बहुकालभुक्तमपि क्षणकालभुक्तं स्वनिर्गुणसुखं सहस्राब्दभुक्तमिवेति तयोः पृथग्भाव इत्यर्थः। उक्तः। सः। हरिः मे मह्यम्। निजम्। तन्निर्गुणसुखम्। दद्यात् ॥ २९५ ॥

द्विविधैरवतीर्णस्य स्वरूपैः स्वस्य चाश्रयात्।
उक्तं श्रेयो नृणां येन हृदयेऽस्तु हरिः स मे ॥ २९६ ॥

द्विविधैरिति। येन। द्विविधैः नृनाट्येऽपि नृपनाट्यसाधुनाट्येति द्विप्रकारैः। स्वरूपैः अवतीर्णस्य प्राकट्यमाप्तस्य। स्वस्य। आश्रयात्। नृणाम्। श्रेयः कल्याणम्। उक्तम्। सः। हरिः। मे। हृदये। अस्तु ॥ २९६ ॥

स्वभक्तान् श्रीहरिर्यस्तु रसालैः स्ववचोऽमृतैः।
सानंदान्विदधे सोऽस्तु ममानंदप्रदः प्रभुः ॥ २९७ ॥

स्वभक्तानिति। यः। श्रीहरिः। स्वभक्तान्। रसालै रसयुक्तैः। स्ववचोऽमृतैः स्वस्वभक्तब्राह्मणदुर्बलद्रोहकृज्जीवनाशभवनं च जीवनाशप्रकारश्च तेषामग्रे मानरक्षिणामप्यासुरभावापत्तिश्च शास्त्रपुराणविदामपि वृत्त्यर्थं सदध्ययनत्वान्मुमुक्षारहितत्वाच्च स्वोपमया भगवत्तदीयमाहात्म्यज्ञानात्स्वार्थंमोक्षमार्गात्कामाद्यरयस्ताम्। पातयंत्येव च ब्रह्मस्थित्या स भगवदेकांतिकमहासाधुष्वसाधारणप्रीतिपूर्वकं तत्सेवया तत्समानस्थितिप्राप्तिस्तन्माहात्म्यज्ञानं च भवेदित्यादिस्ववाक्यपीयूषैरित्यर्थः। आनंदेन सहिताः सानंदास्तान्। विदधे। प्रभुः। स श्रीहरिः। मम। आनंदप्रदः अस्तु ॥ २९७ ॥

स्वस्य निश्चययोः पूर्णापूर्णयोर्लक्षणे हरिः ।
सहेतुके य ऊचेऽसौ स्वं पूर्णं तं क्रियान्मयि ॥ २९८ ॥

स्वस्येति । यः । हरिः । स्वस्य । पूर्णश्चापूर्णश्च तयोः । निश्चययोः । सहेतुके हेतुसहिते लक्षणे । ऊचे । असौ स श्रीहरिः । मयि । स्वं स्वकीयम् । तं निश्चयम् । पूर्णम् । क्रियात् २९८॥

समाधेर्भवने हेतुस्वमूर्त्तिं यो हरिर्जगौ ।
व्यापकत्वं च मूर्त्तस्य स्वमद्धृदि सोऽस्तु वै ॥ २९९ ॥

समाधेरिति । यः । हरिः । समाधेः । भवने । हेतुं हेतुभूताम् । स्वमूर्त्तिं श्रद्धया सप्रेम निरीक्षितसाक्षात्स्वतनुम् । मूर्त्तिमतः । स्वस्य । व्यापकत्वं महासमर्थत्वात् । स्वानन्यसाधारणैश्वर्येण तथैकः सन्ननंतरूपधारणैश्च सर्वत्र व्यापकत्वं च । जगौ प्रोचे । स वै स एव श्रीहरिः । मद्धृदि । अस्तु ॥ २९९ ॥

कुपात्रस्य सुपात्रत्वमुक्त्वा तुर्यः स्वयोगतः ।
हेतुं समाधौ तच्चोचे दृगग्रे सोऽस्तु मे हरिः ॥ ३०० ॥

कुपात्रस्येति । यः । कुपात्रस्य । तुर्मनुष्यस्य । स्वानां स्वस्वकीयानां यो योगो गुणग्रहणादिसंबंधस्तेन । सुपात्रत्वम् । उक्त्वा । समाधौ समाधिभवने । हेतुं कारणभूतम् । तत्सुपात्रत्वं च । ऊचे । सः । हरिः । मे । दृगग्रे । अस्तु सदा तिष्ठतु ॥ ३०० ॥

दैवासुरत्वे संगं च स्वसाधुक्रुधनुग्रहौ ।
यो हेतून्प्राह स हरिर्दैवत्वं मे दृढं क्रियात् ॥ ३०१ ॥

दैवेति । यः । दैवासुरत्वे दैवत्वे आसुरत्वे च । संगं दैवासुरसमागमम् । स्वस्य ये साधव एकांतिकभक्तास्तेषां क्रुध् कोपश्चानुग्रहः प्रसन्नता च तौ च । तानित्यर्थः । हेतून् हेतुभूतान् । प्राह । सः । हरिः । मे मम । दैवत्वं दैवीसंपदाढ्यत्वम् । दृढम् । क्रियात् ॥ ३०१ ॥

शास्त्रिद्विजादिभक्तेभ्यः स्वस्य हार्दं तु यो हरिः ।
अब्रवीत्स करोत्वेव मां स्वहार्दानुसारिणम् ॥ ३०२ ॥

शास्त्रीति । यः । हरिः । शास्त्रिणो ये द्विजा वटपत्तनवासिब्राह्मणास्त आदयो येषां ये भक्तास्तेभ्यः । स्वस्य । हार्दम् । धनिनां राज्ञां च धनराज्यमदोऽस्माकं तु त्यागभक्तिमदश्चास्त्यतः परस्परानुरागो न भवेदित्युक्त्वा तद्दत्तधनग्रामादौ मे लालसा नास्ति किंतु सा तु केवलसाक्षात्कृष्णध्याने एवास्ति ध्याने यादृक्सौख्यं तादृग्धनराज्यादौ नास्त्यतो भगवद्भक्तौ मुमुक्षुसत्संगिमत्संगरक्षणे च ममाग्रहोऽस्तीत्यादिस्वहृद्गताभिप्रायमित्यर्थः । अब्रवीत् । स श्रीहरिः । माम् । स्वाहार्दानुसारिणं तदनुसारेण वर्त्तिनमेव । करोतु ॥ ३०२ ॥

वृद्धौ सत्संगिनां त्राणे समर्थोऽपि स्वयं हरिः ।
स्वहार्दं योऽवदत्स्वेषां शिक्षार्थं सोऽस्तु मे हृदि ॥ ३०३ ॥

वृद्धाविति । यः । हरिः । सत्संगिनां स्वस्वकीयाश्रितानाम् । वृद्धौ 'वृद्धिस्त्राणे रक्षणे च ।' स्वयम् । समर्थः । अपि । स्वेषां स्वभक्तानाम् । शिक्षार्थम् । स्वहार्दम् । अवदत् । स श्रीहरिः मे । हृदि । अस्तु ॥ ३०३ ॥

यो जितेंद्रियतायास्तु प्रकारं स्वसतां स्फुटम् ।
निवृत्तधर्मनिष्ठेभ्यः साधुभ्यः केवलं तथा ॥ ३०४ ॥

य इति । यः । स्फुटं यथा तथा । स्वसतां स्वभक्तानाम् । जितेंद्रियतायाः प्रकारम् । तथा । केवलम् । निवृत्तिधर्मनिष्ठेभ्यः । साधुभ्यः सकाशात् ॥ ३०४ ॥

स्वभक्तानां त्यागिनां तु श्रेष्ठत्वं साधनान्वितम् ।
सहेतुकं हरिः प्राह स धत्तां तां च तन्मयि ॥ ३०५ ॥

स्वेति । साधनान्वितं स्वनियमेषु दृढत्वेन वर्त्तनरूपसाधनसहितम् । त्यागिनां त्यागाश्रमस्थानाम् । स्वभक्तानां स्वस्वकीयभक्त्यात्मकप्रवृत्तौ वर्त्तमानानां तेषाम् । श्रेष्ठत्वं च । सहेतुकं हेतुसहितम् । प्राह । सः । हरिः । मयि । तां जितेंद्रियताम् । तच्छ्रेष्ठत्वं च । धत्तामर्पयताम् ॥ ३०५ ॥

वेद्यं स्वभक्तैः सकलैर्योऽवश्यं लक्षणं हरिः ।
प्रोचे स्वसंप्रदायादेः परोक्षत्वेन तत्र च ॥ ३०६ ॥

वेद्यमिति । यः । हरिः । सकलैस्त्यागिगृहिसमग्रैः । अवश्यम् । वेद्यं ज्ञातुं योग्यम् । स्वसंप्रदायादेः । लक्षणम् । परोक्षत्वेन । प्रोचे । तत्र तस्मिन्नवश्यवेद्ये ॥ ३०६ ॥

प्रत्यक्षस्य परोक्षस्य स्वस्य रूपस्य च स्फुटम् ।
ज्ञानं यथार्थतः प्राह तज्ज्ञानं मे ददातु सः ॥ ३०७ ॥

प्रत्यक्षस्येति । प्रत्यक्षस्य परोक्षस्य च । स्वस्वरूपस्य । ज्ञानं च । स्फुटं यथा तथा । यथार्थतः । प्राह । स श्रीहरिः । मे मह्यम् । तत्स्वस्वरूपसंबंधि । ज्ञानम् । ददातु ॥ ३०७ ॥

स्वभक्तैः सर्वथा स्वस्मिन् कार्यां प्रीतिं स्वसत्सु च ।
यः प्राह स हरिर्दद्यात्तां स्वस्मिन्मे स्वसाधुषु ॥ ३०८ ॥

स्वभक्तैरिति । यः । स्वभक्तैः । सर्वथा । अमायिकसुखयोः सारासारौ ज्ञात्वा ब्रह्मांडजं सौख्यं काकविष्ठोपमं च मत्वेत्यर्थः । स्वस्मिन् । स्वसत्सुखैकांतिकभक्तेषु च । कार्याम् । प्रीतिम् । प्राह । सः । हरिः । मे मह्यम् । स्वस्मिन् । स्वसाधुषु च । तां प्रीतिम् । दद्यात् ॥ ३०८ ॥

कामादीनां समुन्मूलसाधनं ज्ञानमाह यः ।
स्वभक्तान् स हरिर्मह्यं ददातु ज्ञानमेव तत् ॥ ३०९ ॥

कामेति । यः । स्वभक्तान् । कामादीनां रजोगुणोत्पन्नकामतमोगुणोत्पन्नक्रोध-लोभानाम् । तदाद्यधर्मसर्गाणामित्यर्थः । सम्यक्सर्वथा यदुन्मूलमुन्मूलनमंतःकरणाद्विनाशनं तस्य साधनं साधनभूतम् । ज्ञानं सारासारविवेकावबोधनम् । आह जनकनृपतिदृष्टांतेनो-वाच । सः । हरिः । मह्यम् । तत्स्वोक्तमेव । ज्ञानम् । ददातु ॥ ३०९ ॥

यः श्रीहरिर्भक्तजनान्निजान्प्रभुः स्ववाक्यपीयूषरसैर्महामुदः ।
चकार कारुण्यनिधिः पिता स मे ददातु भक्तिं परमां स्वपादयोः ॥३१०॥

इति वृत्तालयोक्ततरंगाः समाप्ताः

य इति । प्रभुर्महासमर्थः । अत एव । कारुण्यनिधिः । यः । श्रीहरिः । निजान् भक्तजनान् । स्ववाक्यपीयूषरसैः । महामुदोऽतिशयानंदाढ्यान् । चकार पिता मम जनकः । स श्रीहरिः । मे मह्यम् । स्वपादयोः । परमां श्रेष्ठाम् । भक्तिम् । ददातु ॥ ३१० ॥

इति श्रीहरिवाक्यसुधासिन्धौ वृत्तालयोक्ततरंगाः समाप्ताः ॥

श्रीनगरोक्ततरंगाः प्रारभ्यन्ते

यः स्वकीयध्यानयोगमाहात्म्यमवदद्धरिः ।
स मे ध्याने सदैवास्तु प्रत्यक्षः पुरुषोत्तमः ॥ ३११ ॥

य इति । यः । स्वकीयध्यानयोगस्य यन्माहात्म्यं तत् । अवदत्स्वाश्रितान्प्रोचे । तत्सिद्धेः साधनमप्यवददिति ज्ञेयम् । पुरुषोत्तमः सः । मे । ध्याने । सदैव । प्रत्यक्षः । अस्तु ॥ ३११ ॥

स्वीयस्य ज्ञानिभक्तस्य श्रेष्ठत्वं स्वान्यभक्ततः ।
येनोक्तं हरिणा कुर्याज्ज्ञानिभक्तं स मां निजम् ॥ ३१२ ॥

स्वीयस्येति । येन । हरिणा । स्वस्य योऽन्यभक्तोऽवस्थात्रयगुणत्रयाढ्यः सन्स्वस्मिन्प्रीतिमांस्तस्मात् । स्वीयस्य ज्ञानिभक्तस्य मायिकोपाधिं त्यक्त्वा ब्रह्मस्वरूपेण स्वस्मिन्प्रीतिमतस्तस्य । श्रेष्ठत्वम् । उक्तम् । स श्रीहरिः । माम् । निजम् । ज्ञानिभक्तं स्वोक्तश्रेष्ठलक्षणाढ्यम् । कुर्यात् ॥ ३१२ ॥

स्वीयस्वोपशमस्थस्य लक्ष्मोपशमसाधनम् ।
यश्चाह स हरिः कुर्यान्मां सदोपशमस्थितम् ॥ ३१३ ॥

स्वीयस्येति । यः । उपशमस्थस्य । स्वमूर्त्तिध्यानाज्ज्ञातेन येन संसृतिकारणविषयासक्तिर्विनश्येत्तथाभूतोपशमस्थितस्येत्यर्थः । स्वीयस्य स्वभक्तस्य । लक्ष्म लक्षणम् । उपशमस्य यत्साधनं तच्च । श्रेष्ठांस्तदुपायानित्यर्थः । आह तदुपायनिष्ठमुकुंदानंदरत्नजिद्धर्मवंश्यानां दृष्टांतप्रदर्शनैः प्रोवाचेत्यर्थः । सः । हरिः । माम् । सदा । उपशमस्थितम् । कुर्यात् ॥ ३१३ ॥

लक्ष्मीपुरे स्वीयपदाब्जभक्तैः सचंदनैर्यः स्थलपद्महारैः ।
तच्छेखरैः पूजित आदरेण पिता स मे श्रीहरिरस्तु चित्ते ॥ ३१४ ॥

इति श्रीनगरोक्ततरंगाः समाप्ताः

लक्ष्मीति । यः । लक्ष्मीपुरे । स्वीयपदाब्जभक्तैः आदरेण सादरं यथा तथा । सचंदनैः । स्थलपद्महारैः । तच्छेखरैश्च । पूजितः । पिता मज्जनकः । सः । श्रीहरिः । मे । चित्ते । अस्तु ॥ ३१४ ॥

इति श्रीहरिवाक्यसुधासिंधौ श्रीनगरोक्ततरंगाः समाप्ताः ॥

अथांत्यप्रकरणोक्ततरंगाः प्रारभ्यन्ते

साधनं स्वस्य भक्तौ यद्विघ्नाभावे तथांऽगयोः ।
ज्ञानप्रीत्योर्लक्षणे च येनोक्ते हरिणा स्फुटम् ॥ ३१५ ॥

साधनमिति । येन । हरिणा । स्वस्य । भक्तौ । विघ्नाभावे विघ्नकृदसद्देशकालक्रिया-संगादीनां योगेऽपि तदभवने । यज्ज्ञानवैराग्यात्मकम् । साधनम् । तत् । उक्तम् । तथा । ज्ञानप्रीत्योरेतत्संज्ञयोः । अंगयोः स्वाभाविकस्थित्योः । लक्षणे च । स्फुटं यथा तथा । उक्ते ॥ ३१५ ॥

स्वकीयशिक्षापत्र्याश्च पाठादीनामवश्यता ।
येनोक्ता सोऽस्तु मे स्वांते भक्तिधर्मसुतोऽन्वहम् ॥ ३१६ ॥

स्वकीयेति । येन च । स्वकीया स्वविरचिता या शिक्षापत्री तस्याः । पाठादीनां प्रत्यहं वाचनश्रवणार्चनानाम् । अवश्यता नियमेनावश्यकरणीयता । उक्ता । भक्तिधर्मसुतः । स श्रीहरिः । अन्वहम् । मे । स्वांते हृदये । अस्तु ॥ ३१६ ॥

मायिकेऽर्थेऽखिले प्रीतिर्न स्यात्स्यात्सर्वथैव सा ।
स्वस्मिन् येन तदूचे यः साऽस्तु तस्मिन्हरौ मम ॥ ३१७ ॥

मायिक इति । यः । मायिके प्रकृतिजन्ये । अखिले समग्रे । अर्थे जागते पदार्थे । येन सत्संगारंभजातस्वांगविलोकनेन । प्रीतिः । सर्वथा । न । स्यात् । सा प्रीतिः । स्वस्मिन्नेव । स्यात् । तत् । ऊचे स्वानब्रवीत् । तस्मिन् । हरौ । मम । सा प्रीतिः । अस्तु ॥ ३१७ ॥

दयास्नेहौ स्वभक्तस्य ब्रह्मरूपस्य यः सदा ।
ऊचे स्वस्मिंन्स्वभक्तेषु स हरिर्मे ददातु तौ ॥ ३१८ ॥

दयेति । यः । ब्रह्मरूपस्य । स्वभक्तस्य । स्वस्मिन् । स्वभक्तेषु च । सदा नैरंतर्येण स्थायिभूतौ । दया च स्नेहश्च तौ । ऊचे । ब्रह्मरूपस्याप्यभक्तस्य तु स्वस्वकीयेषु तौ नेत्यप्यूचे । सः । हरिः । मे मह्यम् । तौ स्वस्वकीयेषु दयास्नेहौ । ददातु ॥ ३१८ ॥

बाधितस्यानुवृत्तिं तु स्वभक्तस्यांतरे स्थिताम् ।
सामान्यसत्तया जीवं विशेषसत्तया तथा ॥ ३१९ ॥

बाधितस्येति । स्वभक्तस्य । अंतरेंऽतःकरणे स्थिताम् । बाधितस्य मिथ्यात्वेन ज्ञातस्यार्थस्य । अनुवृत्तिमनुवर्त्तनम् । तथा । जीवम् । सामान्यसत्तया । विशेषसत्तया च ॥३१९॥

स्थितं देहे स्वकीये च दृष्टांतकथनेन यः।
स्वीयेभ्यः प्राह स हरिर्मज्जीवे वर्त्ततां सदा॥ ३२०॥

स्थितमिति। स्वकीये। देहे। स्थितं तथा। स्वीयेभ्यः। दृष्टांतकथनेन। यः। हरिः। मज्जीवे ब्रह्मरूपमदात्मनि। सदा। वर्त्ततम्॥ ३२०॥

निर्विघ्नायाः सविघ्नायाः स्वभक्तेर्लक्षणे तु यः।
निष्कामस्य सकामस्य स्वभक्तस्यावसानतः॥ ३२१॥

निर्विघ्नाया इति। यः। निर्विघ्नायाः। सविघ्नायाश्च। स्वभक्तेः। लक्षणम्। निष्कामस्य। सकामस्य च। स्वभक्तस्य। अवसानतोऽते। फलकाले इत्यर्थः॥ ३२१॥

तारतम्यसुखस्यैव स्वकीयेभ्य उवाच च।
एकांतिकीं स्वभक्तिं मे दद्यात्स श्रीहरिः सदा॥ ३२२॥

तारतम्यमिति। सुखस्य। तारतम्यमेव च। आद्यस्य महासुखाप्तिरेवान्यस्य न्यूनसुखाप्तिरेवेति तारतम्यमित्यर्थः। स्वकीयेभ्यः। उवाच। श्रीहरिः। मे मह्यम्। सदा। एकांतिकीम्। स्वभक्तिम्। दद्यात्॥ ३२२॥

स्वस्य प्रसन्नताहेतोः स्वभक्तेर्लक्ष्म चाह यः।
स्वीयस्यावश्यतो ज्ञेयं स हरिर्मयि तुष्यतु॥ ३२३॥

स्वस्येति। यः। स्वीयस्य स्वभक्तस्य। अवश्यतः। ज्ञेयं ज्ञातुं योग्यम्। स्वस्य। प्रसन्नताया हेतोर्हेतुभूतायाः। स्वभक्तेः। लक्ष्म। स्वश्रेयोर्थं कृतया दंभेर्ष्याहीनया भक्त्या हरिः प्रसन्नो भवति नानेवंभूतया। स्वेन भक्तस्यापराधो भवेच्चेत्तर्हि स्वस्य दोषो मनआदेर्न ज्ञेय इत्यादि लक्षणमित्यर्थः। आह। सः। हरिः। मयि। तुष्यतु॥ ३२३॥

यो हरिः स्वस्य सिद्धांतं ज्ञेयं स्वीयैरवश्यतः।
प्राह तत्पुरतो देयात्स मे तदनुवर्त्तनम्॥ ३२४॥

य इति। यः। हरिः। स्वीयैः। अवश्यतः। ज्ञेयम् स्वस्य सिद्धांतम्। मुमुक्षूणां कृष्णतद्भक्ततोऽन्यः सुखदो नास्त्यतो यथा स्वदेहे स्वात्ममतिरस्ति तथा कृष्णे तद्भक्तेषु कार्या देहतो हेया तदीयपक्षपातः स्वजनवद्रक्ष्यंस्तस्मिन्सत्यपमानो मृत्युर्वा स्यात्तदपि स न हेयस्तेषु प्रीतिर्देहदैहिकतोऽधिका कार्या तेषामभावो न ग्रहीतव्य एवं यो वर्त्तेत तं कामाद्यरयोऽभिभवितुं न शक्ता ब्रह्मधाम्नि सदा दिव्यविग्रहेण सतोऽत्र दिव्यनराकारेण प्राकट्यं प्राप्तस्य साक्षाद्धरेराश्रयो यस्य स्यात्तेन यमादिभ्यो न भेतव्यमहं कां गतिं यास्यामीत्यपि चिंता न कार्या सोऽवश्यमेव देहांते भगवद्धाम यास्यति तं सोंऽतरा स्थातुं न दास्यत्यतः साक्षात्तस्मिंस्तेन स्वमनो वज्रभूमौ व्रजकील इव दृढप्रयत्नतो योज्यं यत्र पुमान्कृष्णैकमनाः स्यात्स तु देहे सत्येव तद्धाम्न्यतीत्यादिस्वरहस्यमित्यर्थः। तेषां स्वीयानां पुरतोऽग्रे। प्राह। स श्रीहरिः। मे मह्यम्। तदनुवर्त्तनं स्वसिद्धांतानुसारेण वर्त्तनम्। देयात्॥ ३२४॥

सौख्यदानि सदा स्वेषां साधनानि च यो हरिः ।
विघ्नरूपान्स्वस्य भक्तौ दोषांस्त्रीन्स्वेभ्य उक्तवान् ॥ ३२५ ॥

सौख्यदानीति । यः । हरिः । स्वेषां स्वभक्तानाम् । सदा सौख्यदानि । साधनानि । दृढस्वधर्मतीव्रवैराग्याभ्यां सर्वेन्द्रियवशीकरणं कृष्णकार्ष्णेष्वतिप्रीतिस्तेषु मैत्र्यं कचिद्न्य-नौदास्यं च तत्प्रसंगे एव रुचिश्चेति सुखप्रदोपायानित्यर्थः । स्वस्य । भक्तौ । विघ्नरूपान् । त्रीन्स्वदोषानवेक्षणत्वं कृष्णतद्भक्तेभ्यः स्वमनसः पृथग्भावस्तेभ्यो निःस्पृहत्वेन वर्त्तनं चेति त्रिसंख्याकान् । दोषान् । स्वेभ्यः । उक्तवान् ॥ ३२५ ॥

स स्वामी तानि देयान्मे तेभ्यो मां पातु सर्वदा ।
श्रीभक्तिधर्मतनयः प्रभुर्ब्रह्मपुराधिपः ॥ ३२६ ॥

स इति । ब्रह्मपुराधिपः । प्रभुर्महासमर्थः । श्रीभक्तिधर्मतनयः । सः । स्वामी श्रीहरिः । मे मह्यम् । तानि साधनानि । देयात् । तेभ्यो दोषेभ्यः । सर्वदा माम् पातु ३२६॥

महतां स्वस्य साधूनामाह ज्ञानस्थितिं हरिः ।
वेद्यां स्वभक्तैर्यः सर्वैस्तां स्थितिं मे ददातु सः ॥ ३२७ ॥

महतामिति । यः हरिः । सर्वैः । स्वभक्तैः । वेद्याम् । महताम् । स्वस्य । साधूनाम् । ज्ञानेन या स्थितिस्ताम् । आह । स श्रीहरिः मे मह्यम् । ताम् । स्थितिम् । ददातु ॥३२७॥

प्रश्नं पृष्ट्वा माध्ववर्त्मस्थितं विप्रं तदुत्तरम् ।
हरिस्तस्मै स्वसिद्धांतं यश्चाहास्तु स मे हृदि ॥ ३२८ ॥

प्रश्नमिति । यः । हरिः माध्ववर्त्मस्थितं मध्वसंप्रदायिनम् । विप्रं सभास्थं कंचि-द्द्विजम् । प्रश्नम् । पृष्ट्वा । तदुत्तरं प्रकृतिजन्यपृथ्व्यादिसर्वेषां प्रलये विनाशित्वं ततः परदिव्य-वस्तूनां शश्वदविनाशित्वमित्यादि तत्प्रतिवचनम् । स्वसिद्धांतं च । तस्मै विप्राय । आह । स श्रीहरिः । मे । हृदि । अस्तु ॥ ३२८ ॥

प्रश्नोत्तरमयैर्यः स्वान् स्वकीयैर्वचनामृतैः ।
श्रीहरिर्नंदयामास स आनंदप्रदोऽस्तु मे ॥ ३२९ ॥

प्रश्नेति यः । प्रश्नोत्तरमयैः । स्वकीयैः । वचनामृतैरिंद्रियाणां मनसश्च पराजये पृथक्पृथक्साधनानि निर्विकल्पस्थितिस्मृते शांतिहेतुर्महापद्यपि श्रेयोमार्गादपातस्य हेतुः सीता-दृष्टांतेन भगवति स्नेहस्तद्गुणाग्रहणं चेत्यादिवागमृतैः । स्वान् । नंदयामासानंदयत् । सः । श्रीहरिः । मे । मह्यम् । आनंदप्रदः । अस्तु ॥ ३२९ ॥

महानर्थकरं स्वस्य स्वभक्तानां च यो गुणम् ।
अनुपादेयमाहैव तथा भक्तेष्वपि प्रभुः ॥ ३३० ॥

महार्थेति । प्रभुः । स्वस्य । भक्तानां च । अगुणं दोषम् । महानर्थकरं महापापादप्य-धिकत्वाद्भूरितरकष्टप्रदम् । अत एव । अनुपादेयमुपादातुमयोग्यमेव । स्वस्वकीयदोषग्रहणं महाकष्टप्रदमतः स न ग्राह्य इति स्वानुवाचेत्यर्थः । तथा । भक्तेषु । अपि ॥ ३३० ॥

देहसंबंधिषु स्नेहमकार्यं प्राह सर्वथा।
ममैताभ्यां सदोषाभ्यां रक्षां कुर्यात्सदा हरिः॥ ३३१॥

देहेति। देहस्य ये संबंधिनः पितृभ्रातृपुत्रादयस्तेषु। स्नेहम्। सर्वथा। अकार्यं श्रेयोर्थिना कर्तुमयोग्यम्। प्राह। सः। हरिः। एताभ्यां स्वोक्ताभ्याम्। दोषाभ्यां सकाशात्। सदा। मम। रक्षाम्। कुर्यात्॥ ३३१॥

देशादौ विषमे स्वेषां सदैवैकांतिकस्थितिम्।
स्वदृष्टांतेन यः प्राह स हरिस्तां ददातु मे॥ ३३२॥

देशादाविति। यः। स्वेषां स्वभक्तानाम्। विषमे। देशादौ सति। सदैव। एकांतिकस्थितिमेकांतिकधर्मे स्थितिमरत्वम्। स्वदृष्टांतेन। प्राह। सः। हरिः। मे मह्यम्। तां स्वोक्तस्थितिम्। ददातु॥ ३३२॥

स्वैः पृष्टानां द्वादशानां प्रश्नानामुत्तराणि तु।
कृत्वा पृष्ट्वा स्वयं प्रश्नमेकं सद्भ्यां तदुत्तरम्॥ ३३३॥

स्वैरिति। स्वैर्मुक्तानंदादिस्वाश्रितैः। पृष्टानाम्। द्वादशानाम्। नास्तीशेशारवदन्यत्तु सारवस्त्विह किंचन तथाऽपि न दृढप्रीतिर्भक्तानां त्वयि जायते तत्र किं कारणमिति भवानेव परं ब्रह्मसुखाब्धिस्त्वात्सुखप्रदः नान्योऽस्ति सुखदायीति विवेको यस्य वर्त्तते सोऽपि भक्तस्त्वयि कथं दृश्यते प्रीतिवर्जित इति। सत्संगमिह कुर्वाणौ त्वद्भक्तौ स्तो नरावुभौ तयोरेकोऽतिमतिमान्विदन् शास्त्रार्थमंजसा। तथाऽपि कृष्णाद्विमुखो जायमानः स ईक्ष्यते। पुमानन्यस्त्वल्पमतिः किंचिच्छास्त्रार्थवेदनः। तथाऽपि कृष्णं सुदृढमाश्रितोऽस्तीति दृश्यते। अत्र किं कारणमिति। देवास्तथाऽऽसुरा जीवा ज्ञेयाः कैर्लक्षणैः प्रभो इति। सत्संगाद्यैर्यदा जीवा आसुराः स्युः शुभक्रियाः। भजेयुस्त्वां तथा भक्त्या तस्मिन्काले मृता यदि। तर्हि तेषां गतिर्दैवी भवेत्किंवाऽऽसुरी प्रभो इति। तवेश नवधा भक्तौ कतमा श्रेयसी मतेति। किशोराणां च यूनां ते भक्तानामिह सर्वथा। भक्तानां कीदृशां संगोऽवश्यकार्योऽस्तीति। त्वय्येकेन तु भक्तेन क्रोधेनैव दृढं सदा। भयेन त्वयि चैकेन स्नेहेनैकेन चेश्वरे। योजितं स्याद्दृढं स्वांतं तेषां कतम उत्तम इति भजतोऽपि हरे भक्त्या यस्य त्वामंतरे प्रभुम्। सारासारविवेकोऽपि वैराग्यं च भवेन्नहि॥ तस्यै तद्वितयं केनोपायेन हृदये भवेदिति। बुद्धिमंतौ हरे भक्तौ द्वौ कौचिद्भवतः प्रभोः। तत्रैकस्त्वतिविश्वासी यथाऽऽस्मानं भवान्वदेत्॥ तथैवासंशये कुर्यान्न तु स्वस्य प्रियं क्वचित्। त्वदुक्तमपि चान्यस्तु विचार्य वचनं हृदि॥ यावत्स्यादुचितं स्वस्य तावत्कुर्यान्न चाखिलम्। एतयोः कतरः श्रेष्ठ इति। यावज्जीवं हरेरेव कार्यमस्ति प्रियं मम। एवं हृदि भवेद्यस्य निश्चयः सुदृढीकृतः॥ विश्वासः कथमागच्छेत्तस्य ते त्वत्सतां हृदि। अयमत्यंतदृढतायुक्तोऽस्ति भक्तिभागितीति। कथं ज्ञायेत भगवंस्तव त्वत्सेविनां सदा। माहात्म्यं हृदयेऽस्त्यस्य भक्तस्यात्र मुमुक्षत इति। च द्वादशसंख्यानामित्यर्थः। प्रश्नानाम्। उत्तराणि। यस्तु। कृत्वा। स्वयम्। एकम्। प्रश्नम्। कश्चिदेकांतिको भक्तो

-वर्त्तते परमात्मनः । धर्मो ज्ञानं च वैराग्यं भक्तिश्चेति चतुष्टयम् । तीव्रमेवास्ति तच्चास्य नान्यैः -शक्यं प्रधर्षितुम् ॥ अथापि धर्मादिषु तु क्वचिच्छैथिल्यं संभवः जायते तस्य किं तत्र कारणं -स्यादित्यनुयोगमित्यर्थः । पृष्ट्वा तस्य प्रश्नस्य यदुत्तरम् । सद्भ्यां गोपालानंदमुनिब्रह्मानंद- -मुनिभ्याम् ॥ ३३३ ॥

कारयित्वा यथार्थं तत्स्वीकृत्यैव च यो हरिः ।
हर्षयामास तान्सोऽस्तु हर्षदायी सदैव मे ॥ ३३४ ॥

कारयित्वेति । यः । हरिः । कारयित्वा । यथार्थं सत्यमेव । तत्स्वप्रश्नोत्तरम् । -स्वीकृत्य । तान्सर्वान् । हर्षयामास । स श्रीहरिः । मे मह्यम् । सदैव । हर्षदायी । -अस्तु ॥ ३३४ ॥

स्वध्यानादिजसौख्यस्य स्वेषां कारणमाह यः ।
विक्षेपरहितं देयाच्छ्रीहरिस्तत्सुखं स मे ॥ ३३५ ॥

स्वध्यानेति । यः । स्वेषां स्वभक्तानाम् । स्वस्य ध्यानादिभ्यो जातं यत्सौख्यं तस्य । -विक्षेपरहितम् । कारणं नवांगायां हरेर्भक्तावादितं स्वीयमंगं ज्ञात्वा तस्मिन्हरौ स्वस्या- -चलस्थितिविधायिनी सा भक्तिस्तैर्भक्तैः कार्येति हेतुम् । आह । सः । श्रीहरिः । मे मह्यम् । -तत्स्वध्यानादि संबंधि । सुखम् । देयात् ॥ ३३५ ॥

त्यक्त्वाऽप्यन्यं तु गुणिनं स्वस्मिन्कार्या स्वकैर्हरिः ।
प्रीतिर्यैः प्राह साध्वीवद्दद्यात्तां सुदृढां स मे ॥ ३३६ ॥

त्यक्त्वेति । यः । हरिः । स्वकैः स्वभक्तैः । गुणिनं सद्गुणाढ्यमपि । अन्यं स्वेष्ट- -देवादितरमक्षरमुक्तादिकम् । त्यक्त्वा । स्वस्मिन् । साध्वीवत्पतिव्रतावत् । कार्याम् । प्रीतिं दृढस्नेहम् । प्राह । स श्रीहरिः । मे मह्यम् । सुदृढां सुतराम् । च माम् । तां स्वोक्तविधां -स्वस्मिन्प्रीतिम् । दद्यात् ॥ ३३६ ॥

मद्भक्तैर्मामृतेऽन्यार्थेपीति ध्यायिनो सदा ।
कार्येत्याह हरिः स्वेभ्यो यस्तस्मिन्नस्तु मे रतिः ॥ ३३७ ॥

मदिति । यः । मद्भक्तैः । माम् । ऋते विना । अन्यार्थेऽन्यस्मिन्पदार्थे अल्पा । अपि । -प्रीतिः । सदा कदाचिदपि । नो कार्या न विधेया । इत्येवम् । स्वेभ्यः स्वाश्रितेभ्यः । आह -ऋषभात्मजभरतदृष्टांतेनोवाच । तस्मिन् श्रीहरौ । मे । रतिः स्नेहः । अस्तु ॥ ३३७ ॥

ममाथ निर्लोभानंदाखंडानंदसतोरपि ।
प्रश्नानां प्रतिवाक्यानि विधाय श्रीहरिः स्वयम् ॥ ३३८ ॥

ममेति । यः । श्रीहरिः । मम रघुवीराख्यस्य स्वपुत्रस्य मे । अथ । निर्लोभानंदा- -खंडानंदौ यौ संतौ तयोरपि । प्रश्नानाम् । जीवस्य जाग्रतीव स्वप्ने स्थितिः कुतो नेति जाग्रत्य- -दृष्टमश्रुतं च स्वप्ने कथं स्फुरतीति सर्वेषां पूर्वकर्मानुसारेण सुखं दुःखं चास्ति स्वद्भक्तस्यापि

पूर्वकर्मप्राबल्यं कियत्कालं तिष्ठतीत्यनुयोगानाम् । प्रतिवाक्यान्युत्तराणि । विधाय । अथेत्युत्तर-श्लोकाद् ग्राह्यम् । स्वयम् ॥ ३३८ ॥

पृष्ट्वैकं प्रश्नमथ तदुत्तरं च यथायथम् ।
यः स्वानानंदयंश्चक्रे सोऽस्त्वेव हृदि मे पिता ॥ ३३९ ॥

पृष्ट्वेति । एकम् । प्रश्नं सर्वथा यस्य देहाभिमानो नष्टः स्यात्सर्वविषयवासनाश्च नष्टाः स्युरित्यन्यैः कथं ज्ञेयमित्यनुयोगम् । पृष्ट्वा स्वान् । आनंदयन्सन् । यथायथं यथार्थम् । यस्य स्वप्रश्नस्योत्तरम् । चक्रे । पिता मज्जनकः । स एव श्रीहरिः । मे । हृदि । अस्तु ॥ ३३९ ॥

स्वभक्तैस्त्यागिभिः कामं स्वजनेषु तथा रतिम् ।
त्याज्यां यः प्राह स हरिस्तयोस्त्यागं ददातु मे ॥ ३४० ॥

स्वभक्तैरिति । यः । त्यागिभिस्त्यागाश्रमस्थैः । स्वभक्तैः कामं मायिकविषय-कामनाम् । तथा । स्वजनेषु स्वसंबंधिजनेषु स्वशुश्रूषारतेषु च । रतिं स्नेहम् । त्याज्याम् । प्राह । भूरिदोषावहत्वात्कामना देहसंबंधिषु स्वपरिचर्यासक्तेषु च । प्रीतिश्च त्याज्येत्या-हेत्यर्थः । सः । हरिः । मे मह्यम् । तयोः स्वोक्तद्वयोः । त्यागम् । ददातु ॥ ३४० ॥

उक्त्वा स्वभावलक्ष्मैतन्निवृत्तेः साधनं हरिः ।
य ऊचे स्वान्स मे देयात्साधनं तद्दयानिधिः ॥ ३४१ ॥

उक्त्वेति । यः । स्वभावस्य यल्लक्ष्म स्वरूपं तत् । तस्य स्वभावस्य या निवृत्तिस्तस्याः । साधनं च । स्वान्स्वाश्रितान् । ऊचे । दयानिधिः । स श्रीहरिः । मे मह्यम् । तत्स्वोक्तम् । साधनं स्वभावाभिभवोपायम् । देयात् ॥ ३४१ ॥

महतोस्त्यागिनोः स्वस्य प्रश्नोत्तरमिषेण यः ।
ऊचे हरिः स्वसिद्धांतं स तं हृदि दधातु मे ॥ ३४२ ॥

महतोरिति । यः । महतोः स्वानुवृत्त्या महत्त्वं प्राप्तयोः । स्वस्य । त्यागिनोस्त्यागा-श्रमस्थगोपालानंदमुनिशुकानंदमुन्योः । प्रश्नोत्तरमिषेण । स्वसिद्धांतं साक्षात्स्वसंबंधेन प्रवृत्तनिवृत्तधर्मयोर्भक्तिरूपत्वं धर्मज्ञानवैराग्यमाहात्म्यज्ञानाढ्यस्वभक्तीनां स्वाश्रितेषु प्रवर्त्तनार्थं स्थापनाद्यर्थं च मुहुः स्वप्रादुर्भावं भागवतधर्मप्राप्त्यर्थं साधुसेवने स्वस्मात्स्वसाधुभ्यश्चान्यः सेव्यः प्रीतिं कर्तुं योग्यश्च नास्तीत्यादिस्वरहस्यम् । ऊचे । सः । हरिः । मे । हृदि । तं स्वसिद्धांतम् । दधातु ॥ ३४२ ॥

स्वातिप्रियां समीचीनां स्वीयानां वर्त्तनस्य यः ।
रीतिं प्राह हरिर्देयात्स मे तदनुवर्त्तनम् ॥ ३४३ ॥

स्वातिप्रियामिति । यः । स्वस्यातिप्रियाम् । समीचीनां च । स्वीयानाम् । वर्त्तनस्य । रीतिम् । प्राह । सः । हरिः । मे मह्यम् । तस्याः स्वभक्तरीतेर्यदनुवर्त्तनं तत् । देयात् ॥ ३४३ ॥

स्वपूजां मानसीं कार्यां स्वभक्तैः प्रत्यहं हरिः ।
यो यथाकालमाह स्वान् स मे पूज्योऽस्तु सर्वदा ॥ ३४४ ॥

स्वपूजामिति । यः । हरिः । प्रत्यहं प्रतिदिनम् । यथाकालमुष्णादिकालानुसारेण । स्वभक्तैः । कार्याम् । मानसीं मानसिकोपचारैः संपादनीयाम् । स्वपूजां स्वपूजायाः पद्धति-मित्यर्थः । स्वान्स्वाश्रितान् । आह । स श्रीहरिः । सर्वदा । मे । पूज्यः । अस्तु ॥ ३४४ ॥

सुखयामास यः स्वीयान्स्वकीयवचनामृतैः ।
कृपया श्रीहरिर्मेऽस्तु सुखदायी सदैव सः ॥ ३४५ ॥

सुखयामासेति । यः । कृपया कृपालुत्वाद्धेतोरित्यर्थः । स्वीयान् । स्वकीयवचनामृतैः । स्वाक्षरधाम्नि स्वसेवाप्राप्तिसाधनानि स्वधर्मेभ्य आपद्यप्यपतनस्य लक्षणं दुस्त्यजस्वप्रकृतेस्त्या-गोपायः महतां स्वभक्तानां श्रेष्ठांगोक्तिर्ज्ञानांशस्य श्रैष्ठ्यं ज्ञानांशलक्षणं च श्रवणभक्तेः श्रेष्ठतोक्तिः स्त्रीपुंसां परस्परमाहात्म्यावेदनं चेत्यादिस्ववागमृतैरित्यर्थः । सुखयामास । सः । श्रीहरिः । सदैव । मे । सुखदायी । अस्तु ॥ ३४५ ॥

हेतून्स्वस्याप्रियत्वस्य प्रियत्वस्य च यो हरिः ।
दोषान् गुणान्स्वकीयानां स्वेभ्यः प्राह दयानिधिः ॥ ३४६ ॥

हेतूनिति । दयानिधिः । यः । हरिः । स्वस्य । अप्रियत्वस्य । हेतून्हेतुभूतान् । स्वकीयानाम् । दोषान् । स्वस्य प्रियत्वस्य च । स्वकीयानां गुणान् । स्वेभ्यः स्वकीयेभ्यः प्राह । स्वभक्त्यादिसत्कर्मणः स्वीयैरिच्छितव्यफलं स्वप्रसन्नता हेतुरनन्यस्वभक्तलक्षणं चेति त्रयमादौ प्रोच्यानंतरं स्वस्याप्रियत्वप्रियत्वहेतून्दोषान् गुणांश्चाहेत्यर्थः ॥ ३४६ ॥

स मां तेभ्यस्तु दोषेभ्यो रक्षत्वेव सदा तथा ।
गुणांस्तान्मे ददात्वेव भक्तिधर्मात्मजः प्रभुः ॥ ३४७ ॥

स इति । प्रभुर्दोषक्षयकरणे गुणार्पणे च महासमर्थः । भक्तिधर्मात्मजः । स श्रीहरिः । माम् । सदा । तेभ्यः । स्वोक्तेभ्यः दोषेभ्यः रक्षतु एव । तथा । मे मह्यम् । तान्स्वोक्तानेव । गुणान् । ददातु ॥ ३४७ ॥

स्ववचोऽमृतपानेन निजान् हरिरतर्पयत् ।
यस्तु तृप्तिविधाता मे सोऽस्तु कारुण्यवारिधिः ॥ ३४८ ॥

स्ववच इति । यः । निजान्स्वभक्तान् स्ववचोऽमृतपानेन स्वयमिव मान्यानां स्वभक्तानां लक्षणादिवैषम्येऽपि धर्मदृढस्थितेः स्वभक्तस्य लक्षणं विघ्नैरपराभाव्यस्य च स्वधर्म-निष्ठस्वभक्तस्य लक्षणं स्वस्याप्रियस्य च भक्तस्य लक्षणं चैतदादिस्ववाक्यामृतपानविधापनेन । अतर्पयत् । कारुण्यवारिधिः । स श्रीहरिः । मे । तैः । स्ववचोऽमृतैर्या तृप्तिस्तस्य विधाता कर्त्ता अस्तु ॥ ३४८ ॥

स्ववाक्सुधापानतृप्तान् यश्चक्रे कृपया हरिः ।
स्वकीयान्स निवासं मे हृदये कुरुतात्सदा ॥ ३४९ ॥

स्ववागिति । यः । हरिः । कृपया । स्वीयान् स्ववाक्सुधापानतृप्तान् । चक्रे । स्वस्य माहात्म्ययुक्तसेवाप्रकारश्च सद्गुणैः स्वप्रसन्नता चासत्सद्ग्रंथिबंधनत्वं च तत्त्यागात्यागौ चातिदुष्टमानदोषस्य सर्वथा हेयत्वं च स्वनिश्चयकारणं च स्वनिश्चयाढ्यस्य स्वधर्मसहितस्वभक्तिं कुर्वतः स्वजनैः सह भवबंधान्मोचनप्रकारश्च स्वभक्तस्य बंधूनां मोक्षाधिगमभेदश्च समाधौ देहांते वाऽऽत्मपरात्मसुखाधिगमनं चैतदादिस्ववचोऽमृतपानविधापनेनातितृप्तांश्चकारेत्यर्थः । स श्रीहरिः । सदा । मे हृदये । निवासम् । कुरुतात् ॥ ३४९ ॥

यः श्रीहरिः स्ववचनामृतपानविधापनात् ।
तृप्तान्स्वान्दयया चक्रे तस्मिन्मेऽस्तु सदा मनः ॥ ३५० ॥

य इति । यः श्रीहरिः । दयया । स्वान्स्वाश्रितान् । स्ववचनामृतपानविधापनात् । स्वभक्तैः सकाशात्पाता पातहेतुः स्वस्मात्स्वभक्तश्च परावर्त्तनकारणं मानत्यागसाधनं निष्काम-भक्तलक्षणं श्रीहरेः स्वस्य सुखानुभववतो भक्तस्य लक्षणं चैतदादिस्ववाक्सुधापानं कारयित्वेत्यर्थः । तृप्तान् । चक्रे । तस्मिन् श्रीहरौ । मे । मनः । सदा । अस्तु ॥ ३५० ॥

स्वभक्तस्याविरक्तस्य गृहात्यागं च यो हरिः ।
विरक्तस्यैव तत्त्यागं कारणं विरतेस्तथा ॥ ३५१ ॥

स्वभक्तस्येति । यः । हरिः । अविरक्तस्य वैराग्यरहितस्य । स्वभक्तस्य गृहस्थाश्रमस्य योऽत्यागस्तम् । विरक्तस्य वैराग्यवत एव स्वभक्तस्य । तस्य गृहाश्रमस्य यस्त्यागस्तं च । तथा । विरतेर्वैराग्योत्पत्तेः । कारणं च ॥ ३५१ ॥

स्वभक्तेभ्योऽवदत्स्वामी दयया परयैव सः ।
स्वभक्तेरंगभूतां तां विरक्तिं प्रददातु मे ॥ ३५२ ॥

स्वेति । स्वभक्तेभ्यः । परयाऽतिश्रेष्ठया । दयया । एव । अवदत् । सः । स्वामी । मे मह्यम् । स्वभक्तेः । अंगभूताम् । तां स्वोक्ताम् । विरक्तिम् । प्रददातु ॥ ३५२ ॥

युक्तं स्वरुच्या स्वं भक्तं यः प्राह श्रीहरिस्तथा ।
पञ्चकार्यानुसंधानमेतद्देयात्स मे सदा ॥ ३५३ ॥

युक्तमिति । यः । श्रीहरिः । स्वरुच्या । युक्तम् । स्वं स्वकीयम् । भक्तम् । यादृशो भक्तः स्वं रोचेत तल्लक्षणमित्यर्थः । तथा । पंच यानि कार्याण्यर्थास्तेषामनुसंधानं च । प्राह । स श्रीहरिः । सदा । मे मह्यम् । तत्स्वरुच्यनुसारेण वर्त्तनं पञ्चवार्त्तानुसंधानं चेति द्वयम् । देयात् ॥ ३५३ ॥

मूर्त्तेः स्वस्याक्षरस्थाया भूमिस्थायाश्च सर्वथा ।
अभेदं प्राह यः स्वेभ्यो हरिः सोऽस्त्वेव मद्धृदि ॥ ३५४ ॥

मूर्त्तेरिति । यः । अक्षरस्थायाः स्वब्रह्मधामस्थितायाः । भूमिस्थाया नृनयनगोचरायाश्च । स्वस्य । मूर्त्तेः । सर्वथा । अभेदमेकत्वम् । स्वेभ्यः । प्राह । सः । हरिः । मद्धृदि अस्तु तिष्ठत्वेव ॥ ३५४ ॥

स्वकानामिंद्रियजयं चाहारनियमाद् द्विधा ।
माहात्म्यमहिमज्ञानं यो हरिः सोऽस्तु मद्धृदि ॥ ३५५ ॥

स्वकानामिति । यः । स्वकानां स्वभक्तानाम् । आहारस्य यो नियमस्तस्मात् । इंद्रियजयं तत्पराजयप्रकारम् । द्विधा सज्जनासज्जनवेदनप्रकारेण द्विप्रकारम् । आत्मनः स्वस्य महिमा ज्ञानं च । प्राह । सः । मद्धृदि । अस्तु ॥ ३५५ ॥

स्वस्यैव दृढभक्तानां प्रवेशस्य च लक्षणम् ।
स्वस्मिन्स्वभक्तौ विघ्नानां पञ्चानां त्यागमाह यः ॥ ३५६ ॥

स्वस्येति । यः । स्वस्य प्रत्यक्षपरमात्मनः स्वस्यैव । दृढं यथा तथा ये भक्ता मुक्तानंदमुनिगोपालानंदमुन्यादयो भक्तेंद्रास्तेषाम् । लक्षणं तयोर्नामनिर्देशपूर्वकवर्त्तनप्रकारम् । स्वस्मिन् । प्रवेशस्य लक्षणं च । तथाविधदृढस्वैकांतिकभक्तानां लक्ष्मीवत्स्वस्मिन् गाढानुरागेण चेतसि स्वाखंडानुसंधानात्मकं न तु स्वस्मिंल्लीनतारूपमित्यर्थः । स्वभक्तौ । पंचानां विघ्नानां देहाभिमानस्त्रीदुःखस्वभावधनरसासक्तीनां पञ्चांतरायाणाम् । त्यागं च । आह ॥ ३५६ ॥

श्रीहरिः स च मे दद्यात्स्वकीयदृढभक्तताम् ।
स्वस्मिन्प्रवेशं विघ्नेभ्यस्तेभ्यो मे रक्षणं क्रियात् ॥ ३५७ ॥

श्रीति । सः । श्रीहरिः । मे मह्यम् । स्वकीयदृढभक्तानाम् । स्वस्मिन् । प्रवेशं लक्ष्मीवत्स्नेहाधिक्येनाखंडमनुसंधानात्मकं च । दद्यात् । तेभ्यो देहाभिमानादिभ्यः । विघ्नेभ्यः मे । रक्षणं च । क्रियात् ॥ ३५७ ॥

स्वस्यैकवासनाप्राप्तेः स्वभिन्नवासनाक्षतेः ।
स्वभक्तानां साधनानि श्रेष्ठानि च यथार्थतः ॥ ३५८ ॥

स्वस्येति । स्वभक्तानाम् । स्वस्य । एका या वासना तस्याः प्राप्तेः । स्वस्माद्भिन्नानां मायिकविषयाणां या वासना तस्याः क्षतेर्विनाशस्य च । श्रेष्ठानि स्वस्मिन्दृढप्रीतिज्ञानाढ्यवैराग्यवदुत्तमानि । साधनानि आत्मनिवेदिभक्तवदष्टधा स्त्रीवर्जनात्मकब्रह्मचर्यपालनं मायिकपञ्चविषयेषु दोषदृष्टिः श्रद्धया स्वनवधाभक्तिः स्वैकांतिकसाधुसेवा चेति चतुष्टयोपायान् । यथार्थतः ॥ ३५८ ॥

हेयोपादेयतायाश्च विवेकं पुरुषोऽपि यः ।
हरिः प्राह स मे दद्यात्तानि तं च कृपानिधिः ॥ ३५९ ॥

हेयेति । यः । हरिः । प्राह । रुषः क्रोधस्यापि । हेयोपादेयताया अकार्यतयोः । विवेकं च । प्राह । कृपानिधिः । स श्रीहरिः । मे मह्यम् । तानि साधनानि । तं विवेकं च दद्यात् ॥ ३५९ ॥

यः प्रश्नानां शुकानंदमुनेः कृत्वोत्तराणि तम् ।
हर्षयामास हरिर्हर्षदोऽस्तु सदैव मे ॥ ३६० ॥

यः । शुकानंदमुनेः । प्रश्नानाम् । उत्तराणि । कृत्वा । दैहिकाद्यापद्यपि भक्तानां स्वाश्रयस्याचलत्वलक्षणं स्वस्वकीयैः प्रकृतेस्त्याजने भक्तस्य मोहे जातेऽप्युत्तमकनिष्ठयोर्लक्षणं तस्यास्त्याजनावसरे यथार्थतो मनीषाया अनुमानस्य लक्षणं स्वस्य दयाया आधिक्यं सद्द्रोहस्य पापाधिक्यं सतां लक्षणानि चेत्यादिप्रश्नोत्तराणि विधायेत्यर्थः । तं मुनिम् । हर्षयामास । सः । हरिः । मे मह्यम् । सदैव । हर्षदः । अस्तु ॥ ३६० ॥

यः प्राहात्यंतिकश्रेयःसाधनं विघ्नवर्जितम् ।
तन्मार्गे च महाविघ्नमात्मनः स्वस्य चापि हि ॥ ३६१ ॥

यः । विघ्नवर्जितम् । आत्यंतिकश्रेयःसाधनम् । तस्यात्यंतिकश्रेयसो मार्गे । महान् यो विघ्नस्तं च । प्राह । हि निश्चितम् । आत्मनो जीवात्मनः । स्वस्य परमात्मनश्चापि ३६१॥

साक्षाद्दृष्टेः साधनं च श्रीहरिः स ददातु मे ।
तत्साधनं ततो विघ्नान्मां रक्षतु दयानिधिः ॥ ३६२ ॥

साक्षादिति । साक्षात् । दृष्टेर्दर्शनस्य । साधनं च । प्राह । दयानिधिः । सः । श्रीहरिः । मे मह्यम् । तस्यात्यंतिकश्रेयसः साधनम् । ददातु । ततस्तस्मात् । विघ्नात् । माम् । रक्षतु च ॥ ३६२ ॥

विषमत्वेऽपि देशादेः स्यान्न यद्विस्मृतं क्वचित् ।
तज्ज्ञानं स्वस्य यः प्राह देयान्मे श्रीहरिः स तत् ॥ ३६३ ॥

विषमत्व इति । यः । स्वस्य स्वस्वरूपनिश्चयस्य स्वसुखस्य च । यत् । ज्ञानम् । देशादेः । विषमत्वे । अपि । क्वचित् । विस्मृतम् । न । स्यात् । ज्ञानम् । प्राह । सः । श्रीहरिः । मे मह्यम् । तज्ज्ञानम् । देयात् ॥ ३६३ ॥

साक्षान्नराकृतेः स्वस्य सर्वथा भजनीयताम् ।
यो हरिर्दोषहेयत्वं चाह सोऽस्त्वेव मे हृदि ॥ ३६४ ॥

साक्षादिति । यः । नराकृतेः । साक्षात् । स्वस्य । सर्वथा । भजनीयताम् । दोषाणां धनलोभादिषण्णां हेयत्वं च । आह । स श्रीहरिः । मे हृदि । एव । अस्तु ॥ ३६४ ॥

अहंममत्वमायाया हेयत्वं सर्वथाऽऽत्मनः ।
निष्ठां स्वस्य च माहात्म्यज्ञाननिष्ठां च यो हरिः ॥ ३६५ ॥

अहमिति । यः । हरिः । सर्वथा । अहंममत्वरूपा या माया तस्याः । हेयत्वं त्यागार्हत्वम् । आत्मनो निष्ठामात्मस्वरूपज्ञानम् । स्वस्य । माहात्म्यज्ञानस्य या निष्ठा तां च ॥ ३६५ ॥

प्राह स्वेभ्यः स्वानुभवयुक्तियुग्वचनैः स माम् ।
तन्मायातोऽवतु सदा निष्ठे द्वे ते ददातु मे ॥ ३६६ ॥

प्राहेति । स्वेभ्यः स्वभक्तेभ्यः । स्वस्य योऽनुभवो दृष्टांतदर्शनपूर्वकयुक्तियुग्वचनानि च तैः । प्राह । स श्रीहरिः सदा । माम् । साऽहंममत्वरूपा या माया तस्याः सकाशात् । अवतु रक्षतु । मे मह्यम् । ते स्वोक्ते । द्वे । निष्ठे । ददातु ॥ ३६६ ॥

